ओ३म्

# व्याख्यानमाला

अर्थात्

विषयानुक्रमोक्तेश्वरधर्मविद्यादिविविधविषय-
बोधकवेदशास्त्रादिसद्वाक्यानां-
संग्रहात्मको ग्रन्थः ।

स च

श्रीमत्परमहंसपरिव्राजकाचार्य पण्डितस्वामी
अच्युतानन्द-सरस्वतीति नामधेयैः
स्वयमेव संगृह्य लवपुरे ऐंग्लो
संस्कृतेति नामधेययन्त्रा-
लये मुद्रापितः ॥

विदुषां सज्जनानामाशंसनमिदम्

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥१॥

संवत् १९६४ सन १९०८ पुस्तक संख्या १०१०

ओ३म्

# व्याख्यानमाला

अर्थात्

विषयानुक्रमोक्तेश्वरधर्मविद्यादिविविधविषय-
बोधकवेदशास्त्रादिसद्वाक्यानां-
संग्रहात्मको ग्रन्थः ।

स च

श्रीमत्परमहंसपरिव्राजकाचार्य पण्डितस्वामी
अच्युतानन्द सरस्वतीति नामधेयैः
स्वयमेव संगृह्य लवपुरे ऐंग्लो-
संस्कृतेति नामधेययन्त्रा-
लये मुद्रापितः ॥

विदुषां सज्जना

सर्वे भवन्तु सुखिनः स

सर्वे भद्राणि पश्यन्तु मा



संवत् १९६४ सन १९०८ पुस्तक संख्या १०१०

# व्याख्यानमालाया विषयानुक्रमः

# श्रीकच्छदेशाधिपतिभ्योऽर्पणपत्रम्

श्रीखेङ्गारजिनामकाय विदुषे राजाऽधिराजाय ते धर्मिष्ठाय नितान्तशान्तवपुषे वश्येन्द्रियाय प्रभो। कच्छं रामयुधिष्ठिरा- दिवदिमं न्यायेन संशासते सुप्रीतेन मयाऽर्पिताऽतिसुखदा व्याख्यानमाला शुभा ॥ १ ॥ दमदानदयाशमशौर्य्यरतः सुमतिश्च महामहिमामहितः। जगतामुपकारनिमित्तमिमं वपु- षापि मुदा कुरुते श्रमकम् ॥ २ ॥ सकलं गुणसंघमहं भवतां प्रतिपत्तुमलं नृपवर्य्य न यम्। वपुषि प्रबिभर्षि मुदा सततं जलधेरिव रत्नचयं विपुलम् ॥ ३ ॥ जगतामुपकाराय कुरुषे त्वं धनव्ययम्। न मनोजविकारश्च दृश्यते त्वयि सन्मते ॥ ४ ॥ आनन्दसङ्गमतिमात्रमवाप्य शश्वद्भृत्यैश्च बान्धवगणैः सुयुतो महौजाः। लोकोपकारनिरतश्च चिरायुरस्तु स्वाम्ये- वमिच्छति सदा जगतामधीशात् ॥५॥ गुणैर्गरिष्ठं नयधर्मदक्षं सत्कर्मणां प्रेरकछोटलालम्। सन्मन्त्रिणं ते प्रसमीक्ष्य नित्यं परं प्रसन्नोऽस्मि नरेन्द्रवर्य्य ॥ ६ ॥ छोटालालमहोदयोऽति- नतिमान् शुद्धोऽधिकारी सुधीः श्रीमद्राज्यविभूषणः सुनिपुणो विद्वज्जनानां प्रियः। धैर्यौदार्य्ययुतः प्रजासुखकरो राजंस्त्वया मानितः आशासे जगदीशतोऽस्तु भवतां सङ्गः सदैतन्निभैः ।७।

## श्रीमान् देशहितैषी डाक्टर साहब मुन्शीरामशर्माजी,

### वर्तमान निवास स्थान अमृतसर

आप विद्यारसिक परमउदार सरलस्वभाव शुद्धहृदय परउपकारी पवित्र जीवनवाले उत्तम पुरुष हैं, इस भारत देश की गिरीहुई दशाको देखकर आपके मनमें देशउद्धार की उत्कट इच्छा को जानकर किस देश शुभचिन्तक का मन प्रसन्न न होता होगा, देश और धर्म की रक्षक संस्कृतविद्या की वृद्धि चाहनेवाले आप श्री को ही यह धार्मिकपुस्तक मैं अर्पण करता हूं, इसकी चतुर्थी आवृत्ति छपवाने में आपने बडी सहायता दी है इसलिये आपको धन्यवाद देता हूं। श्रीमान् महाशय रामचन्द्रजी मालिक 'ऐंग्लो-संस्कृत प्रेस' लाहौर, तथा श्रीमान् मिश्र मेलारामजी रईस नकोदर, और श्रीमान् मास्टर शामलालजी हिसार, इन महाशयों को भी मैं धन्यवाद देता हूं कि जिन्हों ने इस पुस्तक के छपवाने में सहायता दी, परमकृपालु परमेश्वर इन चारो महाशयों को सदा सुखी रखे, और देश उपकारी वेद तथा संस्कृत विद्या के प्रचार में प्रवृत्त करता रहे, संस्कृतविद्या के प्रचार में इनकी

प्रीति को देख दूसरे सज्जनों को भी इस ऋषियों की विद्या में प्रभु प्रवृत्त करे कि जिससे हमारे धर्म और देश का उद्धार हो ॥ शक्तिमानप्यशक्तोऽसौ धनवानपि निर्धनः । श्रुतवानपि मूर्खश्च यो धर्मविमुखो नरः ॥ यह व्यास महर्षि का वचन है, जो नर प्रभु भक्ति और ईश्वर की आज्ञारूप धर्म से विमुख है, वह कैसा ही बलवान् क्यों न हो निर्बल है, धनवान् भी निर्धन है, पण्डित भी मूर्ख है । इसलिये आओ हम उस परमदयालु पिताजी की भक्ति करें और उसकी आज्ञारूप वैदिक धर्म का सेवन करें, क्योंकि देश उन्नति का कारण भी ईश्वरभक्ति और ईश्वर की आज्ञारूप धर्म का सेवन है उस धर्म को बताने वाले वेद और संस्कृत विद्या है उसका प्रचार करें । इस धार्मिक पुस्तक की रजिष्ट्री नहीं कराई और न कराने की इच्छा है जिसकी मर्जी हो छापे और सब तरह का लाभ जो मिल सके उठावे हम प्रसन्न हैं । इसलं बहुना विज्ञवरेषु ।

ह०—आप सर्व वैदिक सिद्धान्त अनुयायिओं का

शुभचिन्तक

स्वामी अच्युतानन्द सरस्वती, लाहौर ।

# ओ३म्

## परमेश्वर-महिमा. १

यतो यतः समीहसे ततो नो अभयं कुरु ।
शं नः कुरु प्रजाभ्यो अभयं नः पशुभ्यः ॥

---

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ १ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ २ ॥ अशुभानि निराचष्टे तनोति शुभसन्ततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः ॥ ३ ॥ स्मृतेः सकलकल्याणभाजनं यस्य जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ ४ ॥ हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ५ ॥ तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ६ ॥ जगतां यदि नो कर्ता कुलालेन विना घटः । चित्रकारं विना चित्रं स्वत एव भवेत्तदा ॥ ७ ॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषा-

दधि । नैनमूर्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत् ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥ भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ १० ॥ एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ ११ ॥ दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ १२ ॥ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारणी ॥ १३ ॥ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥ १४ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ १५ ॥ स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥ १६ ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ॥ १७ ॥ इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ]

स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ १८ ॥ युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः । शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ १९ ॥ यो देवोऽग्नौ यो ऽप्सु यो विश्वं भुवनमाविवेश । य ओषधिषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ २० ॥ अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ २१ ॥ अशब्दमस्पर्शमरूपमव्ययं तथा ऽरसं नित्यमगन्धवच्चयत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ २२ ॥ एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं ये ऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ २३ ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं ये ऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ २४ ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा

विधेम ॥ २५ ॥ य एको ऽवर्णो बहुधा शक्तियोगाद् वर्णा- ननेकान्निहितार्थो दधाति । विचैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥ २६ ॥ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्तभोगामजो ऽन्यः ॥ २७ ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिष- स्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाक- शीति ॥ २८ ॥ समाने वृक्षे पुरुषो निमग्नो ऽनीशया शो- चति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमान- मिति वीतशोकः ॥ २९ ॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे वि- धूय निरञ्जनः परमं साम्यमुपैति ॥ ३० ॥ बृहच्च तद्दिव्य- मचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति । दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥ ३१ ॥ नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्य- लिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ३२ ॥ ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा

अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य
इत्तद्विदुस्त इमे समासते ॥ ३३ ॥ स एव काले भुवनस्यास्य
गोप्ता विश्वाधिपः सर्वभूतेषु गूढः । यस्मिन्युक्ता ब्रह्मर्षयो
देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ ३४ ॥ यथोर्ण-
नाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति ।
यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्
॥ ३५ ॥ स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी
सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थिति
बन्धहेतुः ॥ ३६ ॥ स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं
शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतो-
ऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ३७ ॥ यस्मान्न
जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा
प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते सपो-
डशी ॥ ३८ ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च
प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरण-
महं प्रपद्ये ॥ ३९ ॥ नमस्ते सते ते जगत्कारणाय नमस्ते
चिते सर्वलोकाश्रयाय । नमोऽद्वैततत्त्वाय मुक्तिप्रदाय

नमो ब्रह्मणे व्यापिने शाश्वताय ॥ ४० ॥ त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं जगत्पालकं स्वप्रकाशम् । त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ त्वमेकं परं निश्चलं निर्विकल्पम् ॥ ४१ ॥ भयानां भयं भीषणं भीषणानां गतिः प्राणिनां पावनं पावनानाम् । महोच्चैः पदानां नियन्तृ त्वमेकं परेषां परं रक्षणं रक्षणानाम् ॥ ४२ ॥ वयन्त्वां स्मरामो वयन्त्वां भजामो वयन्त्वां जगत्साक्षिरूपं नमामः । सदेकं निधानं निरालम्बमीशं भवाम्भोधिपोतं शरण्यं व्रजामः ॥ ४३ ॥ विदुर्यं न चित्तेन्द्रियाणीन्द्रियेशं विजानाति यस्तानि नित्यं नियन्ता । जगत्साक्षिणं व्यापकं विश्ववन्द्यं चिदानन्दरूपं तमीशं प्रपद्ये ॥ ४४ ॥ अणोरप्यणीयान्महद्भ्यो महीयान् रवीन्दुग्रहज्याभगोलादिकर्ता । य ईशो हि सृष्ट्यादिमध्यान्तसंस्थश्चिदानन्दरूपं तमीशं प्रपद्ये ॥ ४५ ॥ यतो जायते विश्वमेतत्समस्तं स्थितं यत्र यस्मिँल्लयं याति काले । अनादिं विभुं चादिमध्यान्तशून्यं चिदानन्दरूपंतमीशं प्रपद्ये ॥ ४६ ॥ वशे यस्य विश्वं समस्तं सदाऽऽस्ते यदाभासतो भाति यद्वै विचित्रम् । न जानन्ति यन्तत्त्वतो योगिनोऽपि चिदानन्दरूपन्तमीशं

मपद्ये ॥ ४७ ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम ॥ ४८ ॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणन्त्वमेव त्वमेव सर्वं मम देवदेव ॥ ४९ ॥ तमीश्वराणां परमं महेश्वरन्तन्देवतानां परमञ्च दैवतम् । पतिम्पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ ५० ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासःसाक्षी चेता केवलो निर्गुणश्च ॥ ५१ ॥ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ ५२ ॥ अणोरणीयान्महतो महीयानात्मा ऽस्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ ५३ ॥ न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ५४ ॥ न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता

न चाधिपः ॥ ५५ ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ ५६ ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥ ५७ ॥ न संदृशे तिष्ठति रूप-मस्य न चक्षुषा पश्यति कश्चनैनम्। हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ ५८ ॥ यस्मादुत्पत्तिगुप्ती क्षतिरपि जगतां यच्च शास्त्रैकयोनिः सर्वज्ञं मायया यत्सहज-सुखसदद्वैतसंवित्स्वरूपम्। तद्ब्रह्म स्वप्रकाशं श्रुतिशिखरगिरां सैव तात्पर्यभूमिः स्वात्माऽसौ यं विदित्वा जनिमृतिजलधिं निस्तरन्तीह सन्तः ॥ ५९ ॥ भूः पादौ यस्य खञ्चोदरमसुर-निलश्चन्द्रसूर्यौ च नेत्रे कर्णावाशा शिरो द्यौर्मुखमपि दहनो यस्य वास्तव्यमब्धिः। अन्तस्थं यस्य विश्वं सुरनरखगगो-भोगिगन्धर्वदैत्यैश्चित्रं रंरम्यते तन्त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ ६० ॥

---

# धर्मवर्णनम्. २

सुखार्थाः सर्वभूतानां मताः सर्वाःप्रवृत्तयः। सुखञ्च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥ १ ॥ धर्मं शनैःसंचिनुयाद्वल्मीकमिव पुत्तिकाः । परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ २ ॥ नामुत्र हि सहायार्थं पिता माता च तिष्ठतः । न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥३॥ एकः प्रजायते जन्तुरेक एव प्रलीयते । एको नु भुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ ४ ॥ एकः पापानि कुरुते फलं भुङ्क्ते महाजनः। भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ५ ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ ६ ॥ तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः । धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ७ ॥ एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः । शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ ८ ॥ धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने । देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥ ९ ॥ धर्मे मतिर्भवतु वः सततोत्थितानां सह्येक एव परलोकगतस्य बन्धुः । अर्थाः स्त्रियश्च निपुणै-

रपि सेव्यमाना नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥१० ॥ वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥११॥ सकलाऽपि कला कलावतां विकला पुण्यकलां विना खलु । सकले नयने वृथा यथा तनुभाजां हि कनीनिकां विना ॥ १२ ॥ आयुः क्षणलवमात्रं न लभ्यते हेमकोटिभिः क्वापि । तच्चेद्गच्छति सर्वं मृषा ततः काऽधिका हानिः ॥ १३ ॥ अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यः संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ १४ ॥ यावत्स्वस्थमिदं देहं यावन्मृत्युश्च दूरतः । तावदात्महितं कुर्यात्प्राणान्ते किं करिष्यति ॥ १५ ॥ युवैव धर्मशीलः स्यादनित्यं खलु जीवितम् । को हि जानाति कस्याद्य मृत्युकालो भविष्यति ॥ १६ ॥ जीवन्तं मृतवन्मन्ये देहिनं धर्मवर्जितम् । मृतो धर्मेण संयुक्तो दीर्घजीवी न संशयः ॥ १७ ॥ अजरामरवत्प्राज्ञो विद्यामर्थञ्च चिन्तयेत् । गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ १८ ॥ उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम् । आयुषः खण्डमादाय रविरस्तं गमिष्यति ॥ १९ ॥

अस्थिरं जीवितं लोके ह्यस्थिरे धनयौवने । अस्थिराः पुत्रदाराश्च धर्मः कीर्तिर्द्वयं स्थिरम् ॥ २० ॥ मुहूर्तमपि जीवेच्च नरः शुक्लेन कर्मणा । न कल्पमपि पापेन लोकद्वय-विरोधिना ॥२१॥ यस्यात्मा विरतः पापात्कल्याणे च निवेशितः । तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ २२ ॥ यौवनं जीवितं चित्तञ्छाया लक्ष्मीश्च स्वामिता । चञ्चलानि षडेतानि ज्ञात्वा धर्मरतो भवेत् ॥२३॥ सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः । सर्वमात्मनि संपश्यन्नाधर्मे कुरुते मनः ॥ २४ ॥ धर्मिष्ठमुपसर्पन्ति प्रजाः सर्वा महातरुम् । सुसेव्यं फलपुष्पादिपूर्णं मार्गस्थितं यथा ॥ २५ ॥ दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् । अष्टमासेन तत्कुर्याद्येन वर्षाःसुखं वसेत् ॥ २६ ॥ पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् । यावज्जीवेन तत्कुर्याद्येनामुत्र सुखं वसेत् ॥ २७ ॥ धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् । सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥ २८ ॥ अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः । अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥२९॥ वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।

एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ ३० ॥ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ ३१ ॥ सुखितस्य दुःखितस्य च संसारे धर्म एव तव कार्यः । सुखितस्य तदभिवृद्ध्यै दुःखभुजस्तदुपघाताय ॥ ३२ ॥ मानुष्ये सति दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता विप्रत्वे बहुविद्यताऽतिगुणता विद्यावतोऽर्थज्ञता । अर्थज्ञस्य विचित्रवाक्यपटुता तत्रापि लोकज्ञता लोकज्ञस्य समस्तशास्त्रविदुषो धर्मे मतिर्दुर्लभा ॥ ३३ ॥ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अबन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ ३४ ॥ येषां च बहवः शूरा ज्ञातयो धर्ममाश्रिताः । ते जीवन्ति सुखं लोके कर्षन्ति च महद्यशः ॥ ३५ ॥ विद्या रूपं धनं शौर्यं कुलीनत्वमरोगता । राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्मादवाप्यते ॥३६॥ शक्तिमानप्यशक्तोऽसौ धनवानपि निर्धनः । श्रुतवानपि मूर्खश्च यो धर्मविमुखो नरः ॥ ३७ ॥ धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् । न तत्सेवेत मेधावी नहि तद्धितमुच्यते ॥ ३८ ॥ न हर्तव्यं परधनं धर्म्म एष सनातनः ।

मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रकीर्तितम् ॥ ३९ ॥ न ह्यत्यन्तं बलवन्तो भवन्ति सुखिनोऽपि वा । तस्मादनार्जवे बुद्धिर्न कार्या ते कदाचन ॥ ४० ॥ दातव्यमित्ययं धर्म्म उक्तो भूतहिते रतैः । तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् ॥ ४१ ॥ यदा नियतिकार्पण्यमर्थैषामेव रोचते । न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनोऽपि वा ॥ ४२ ॥ वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः । तद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम् ॥ ४३ ॥ धर्मो माता पिता चैव धर्मो बन्धुः सुहृत्तथा । धर्मः स्वर्गस्य सोपानं धर्मात्स्वर्गमवाप्यते ॥ ४४ ॥ आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ ४५ ॥ ये सन्तुष्टाः श्रुतिपरा महात्मानो महाबलाः । धर्म्यं पन्थानमारूढास्तानुपासस्व पृच्छ च ॥ ४६ ॥ अवधार्य मतं तेषां बुधानां धर्मदर्शिनाम् । नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥ ४७ ॥ मनो हि सर्वभूतानां सन्तनोति शुभाशुभम् । अशुभेभ्यस्तदाक्षिप्य शुभेऽर्थे चावधारय ॥ ४८ ॥ कामं क्रोधं भयं लोभं दम्भं मोहं मदं तथा । निद्रां

मत्सरमालस्यं नास्तिक्यं च परित्यज ॥ ४९ ॥ सत्यमार्जवमक्रोधमनसूयां दमं तपः । अहिंसां चानृशंस्यं च क्षमां चैवानुपालय ॥ ५० ॥ सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् । तथात्मानं समाधत्स्व भ्रश्यसे न पुनर्यथा ॥ ५१ ॥ आनृशंस्यमहिंसा चाप्रमादः संविभागिता । श्राद्धकर्मातिथेयञ्च सत्यमक्रोध एव च ॥ ५२ ॥ स्वेषु दारेषु सन्तोषः शौचं नित्यानुसूयता । आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥ ५३ ॥ यश्च प्राज्ञो नरस्तात सात्त्विकीं वृत्तिमास्थितः । तस्यैश्वर्य्यं च धैर्यं च व्यवसायश्च कर्मसु ॥ ५४ ॥ यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५५ ॥ धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ५६ ॥ चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः । दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥ ५७ ॥ पुत्रैर्मित्रैर्गृहैर्दारैर्वियुक्तस्य धनेन वा । मग्नस्य व्यसने कृच्छ्रे पुंसः श्रेयस्करी धृतिः ॥ ५८ ॥ धैर्येण युक्तं सततं शरीरं न विशीर्यते । विशोकता सुखं धत्ते धत्ते चारोग्यमुत्तमम् ।

आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ ५९ ॥
सपदि विलयमेतु राजलक्ष्मीरुपरि पतन्त्वथवा कृपाणधाराः
। अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैतु
धर्मात् ॥ ६० ॥ धर्माज्जन्म कुले शरीरपटुता सौभाग्यमा-
युर्बलम् धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसम्पत्तयः ।
कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते धर्मः सम्यगु-
पासतां भवति हि स्वर्गापवर्गप्रदः ॥ ६१ ॥ धर्मः सर्वसुखं-
करो हितकरो धर्मं बुधाश्चिन्वते धर्मेणैव समाप्यते शिवसुखं
धर्माय तस्मै नमः । धर्मान्नास्त्यपरः सुहृद्भवभृतां धर्मो हि
द्रव्यं सतां धर्मे चित्तमहं दधे प्रतिदिनं हे धर्म मां पालय ॥
६२ ॥ संक्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण वः । परो-
पकारः पुण्याय पापाय परपीडनम् ॥ ६३ ॥ आरम्भो
न्याययुक्तो यः स हि धर्म इति स्मृतः । अनाचारस्त्वधर्मेति
ह्येतच्छिष्टानुशासनम् ॥ ६४ ॥ इज्याऽध्ययनदानानि तपः
सत्यं क्षमा दमः । अलोभ इति मार्गोऽयं धर्मस्याष्टविधः
स्मृतः ॥ ६५ ॥ श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ ६६ ॥ यथ°

यथा हि पुरुषः कल्याणे कुरुते मनः । तथा तथाऽस्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥ ६७ ॥ सर्वेषां यः सुहृन्नित्यं सर्वेषाञ्च हिते रतः । कर्मणा मनसा वाचा स धर्मं वेद नेतरः ॥ ६८ ॥ परापवादं न ब्रूयान्नाप्रियञ्च कदाचन । न मन्युः कश्चिदुत्पाद्यः पुरुषेण सुखार्थिना ॥ ७० ॥ अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च दानञ्च सतां धर्मः सनातनः ॥७०॥ चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुभाषितम् । उत्थाय चासनन्दद्यादेष धर्मः सनातनः ॥ ७१ ॥ अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् । अजातशत्रो सेवस्व धर्म एषः सनातनः ॥ ७२ ॥ सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ॥ ७३ ॥ गृहस्थः पालयेद्दारान्विद्यामभ्यासयेत्सुतान् । गोपयेत्स्वजनान्बन्धूनेष धर्मः सनातनः ॥ ७४ ॥ दमः पवित्रं परमं मङ्गल्यं परमं दमः । दमेन सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति ॥ ७५ ॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते ॥ ७६ ॥ धर्मस्य तस्य लिङ्गानि दया क्षान्तिरहिंसनम् ।

तपो दानञ्च शीलञ्च सत्यं शौचं वितृष्णता ॥ ७७ ॥
सत्यादुत्पद्यते धर्मो दयादानाद्विवर्द्धते । क्षमया तिष्ठते धर्मः
क्रोधाद्धर्मो विनश्यति ॥ ७८ ॥ अहिंसा सत्यमस्तेयं शौच-
मिन्द्रियनिग्रहः । एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः
॥७९॥ आर्जवं धर्ममित्याहुरधर्मो जिह्म उच्यते । आर्जवेनेह
संयुक्तो नरो धर्मेण युज्यते ॥ ८० ॥ सर्ववेदेषु वा स्नानं
सर्वभूतेषु चार्जवम् । उभे एते समे स्यातामार्जवं वा विशि-
ष्यते ॥ ८१ ॥ ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्वदा । नृयज्ञं
पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥ ८२ ॥ अध्यापनं ब्रह्म-
यज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञो-
ऽतिथिपूजनम् ॥ ८३ ॥ पञ्चयज्ञांस्तु यो मोहान्न करोति
गृहाश्रमे । तस्य नायं न च परो लोको भवति धर्मतः ॥
८४ ॥ वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः । तं ह्यस्याहुः
परं धर्ममुपधर्मोऽन्य उच्यते ॥ ८५ ॥ न तिष्ठति तु यः पूर्वां
नोपास्ते यश्च पश्चिमाम् । स साधुभिर्बहिष्कार्यः सर्वस्मा-
द्द्विजकर्मणः ॥ ८६ ॥ बालो वा यदि वा वृद्धो युवा वा
गृहमागतः । तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः

॥ ८७ ॥ उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः । पूजनीयो यथायोग्यं सर्वस्याभ्यागतो गुरुः ॥ ८८ ॥ राज्यञ्च सम्पदाभोगाः कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्मस्यैतत्फलं विदुः ॥ ८९ ॥ सुकुलजन्म विभूतिरनेकधा प्रियसमागमसौख्यपरम्परा । नृपकुले गुरुता विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥ ९० ॥ प्रियवचनवादी प्रियो भवति विमृशितकार्यकरोऽधिकं जयति । बहुमित्रकरः सुखं वसते यश्च धर्मरतः स गतिं लभते ॥ ९१ ॥ न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः । नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ९२ ॥ न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् । अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥ ९३ ॥ अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम् । हिंसारतश्च यो नित्यं नेहासौ सुखमेधते ॥ ९४ ॥ धर्मं प्रसङ्गादपि नाचरन्ति पापं प्रयत्नेन समाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥९५॥ यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च । हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ९६

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः। तस्माद्धर्मो न हातव्यो मा नो धर्मो हतोऽवधीत् ९७ ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा। सनातनस्य धर्मस्य मूलमेतत्सनातनम् ॥ ९८ ॥ इहोपपत्तिर्मम केन कर्मणा क्व वा प्रयातव्यमितो भवेदिति। विचारणा यस्य न विद्यते स्मृतौ कथं स धर्मप्रवणो भविष्यति ॥९९॥ आहारनिद्राभयमैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम्। धर्मो हि तेषामधिको विशेषो धर्मेणहीनाःपशुभिः समानाः १००

---

## क्षमाप्रभावः ३

क्षमातुल्यं तपो नास्ति संतोषान्न परं सुखम्। न च तृष्णापरो व्याधिर्न च धर्मो दयापरः ॥ १ ॥ बाह्ये वाऽभ्यन्तरे चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥ २ ॥ क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति। अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ ३ ॥ क्षमाबलमशक्तानां शक्तानां भूषणं क्षमा। क्षमा वशीकृतिर्लोके क्षमया किन्न साध्यते ॥ ४ ॥ नरस्याभरणं रूपं रूपस्याभरणं गुणः। गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ ५ ॥ क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम्।

अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ ६ ॥ प्रियाप्रियेषु सर्वेषु समत्वं यच्छरीरिणाम् । क्षमा सैवेति विद्वद्भिर्गदिता वेदवादिभिः ॥ ७ ॥ यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः । न स्यात्सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥ ८ ॥ हिंसाबलमसाधूनां राज्ञां दण्डविधिर्बलम् । शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥ ९ ॥ क्षुधासमं नास्ति शरीरपीडनं चिन्तासमं नास्ति शरीरशोषणम् । विद्यासमं नास्ति शरीरभूषणं क्षमासमं नास्ति शरीररक्षणम् ॥ १० ॥ आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् । वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ११ ॥ आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः । आक्रोष्टारं निर्दहति सुकृतञ्चास्य विन्दति ॥ १२ ॥ यः परेषां नरो नित्यमतिवादांस्तितिक्षते । देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ १३ ॥ यः समुत्पतितं क्रोधमक्रोधेन निरस्यति । देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ १४ ॥ यः समुत्पतितं क्रोधं क्षमयेह निरस्यति । यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥१५॥ यः संधारयते मन्युं यो ऽतिवादांस्तितिक्षते । यश्च तप्तो न

तपति दृढं सों ऽर्थस्य भाजनम् ॥ १६ ॥ यो यजेदपरिश्रान्तो मासि मासि शतं समाः । न क्रुध्येद्यश्च सर्वस्य तयोरक्रोधनोऽधिकः ॥ १७ ॥ क्रोधो मूलमनर्थानां क्रोधः संसारवर्द्धनः । धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥ १८ ॥ क्रोधस्य कालकूटस्य विद्यते महदन्तरम् । स्वाश्रयं दहति क्रोधः कालकूटो न चाश्रयम् ॥ १९ ॥ उत्तमे तु क्षणं कोपो मध्यमे घटिकाद्वयम् । अधमे स्यादहोरात्रं चाण्डाले मरणान्तिकः ॥ २० ॥ क्रोधो नाशयते धैर्यं क्रोधो नाशयते श्रुतम् । क्रोधो नाशयते सर्वं नास्ति क्रोधसमो रिपुः ॥ २१ ॥ यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते । तेजस्विनन्तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥ २२ ॥ विपाके दुःखं कामस्य नाधुना सर्वदेहिनाम् । विपाके ऽप्यधुना क्रोधः सर्वदा दुःखदः स्मृतः ॥ २३ ॥ जायते यत्र स क्रोधस्तन्दहेदेष सर्वतः । विपयञ्च क्वचित्क्रोधः सफलो निर्दहेदयम् ॥ २४ ॥ अश्वारोहं यथा दुष्टो वाजी गर्ते निपातयेत् । एवं क्रोधो ऽपि नरके नरमाशु निपातयेत् ॥ २५ ॥ सुखार्थिनस्ततः पुंसो नास्ति कोपसमो रिपुः । ततः कोपो नियन्तव्यः कामादप्य-

तिकृष्टदः ॥ २६ ॥ क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरू-नपि । क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ २७ ॥ वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् । नाकार्य-मस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ २८ ॥ हिंस्यात्क्रो-धादवध्यांस्तु वध्यान्संपूजयीत च । आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ २९ ॥ एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ।इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥३०॥ येषां मन्युर्मनुष्याणां क्षमयाऽभिहतः सदा । तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता ॥ ३१ ॥ अपकारिणि कोप-श्चेत्कोपे कोपः कथं न ते । धर्मार्थकाममोक्षाणां प्रसह्य परि-पन्थिनि ॥ ३२ ॥ लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रव-र्तते । द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः ॥ ३३ ॥ मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् । क्रोधाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥ ३४ ॥ अबुद्धिमाश्रितानान्तु क्षन्तव्यमपराधिनाम् । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषेण ॥ ३५ ॥ पूर्वोपकारी यस्ते स्यादपराधे गरीयसि । उपका-रेण तत्तस्य क्षन्तव्यमपराधिनः ॥ ३६ ॥ धन्यास्ते पुरुष-

व्याघ्रा ये बुद्ध्या कोपमुत्थितम् । निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥ ३७ ॥ फलान्वितो धर्मयशोऽर्थ-नाशनः स चेदपार्थः स्वशरीरतापनः । न चेह नामुत्र हिताय यः सतां मनांसि कोपः समुपाश्रयेत्कथम् ॥ ३८ ॥ न भवति भवति च न चिरं भवति चिरञ्चेत्फले विसंवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ३९ ॥ क्रोधो हि शत्रुः प्रथमो नराणां देहस्थितो देहविनाशनाय । यथास्थितः काष्ठगतो हि वह्निः स एव वह्निर्दहते च काष्ठम् ॥ ४० ॥ अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः । अविभिद्य निशाकृतन्तमः प्रभया नांशुमता ऽप्युदीयते ॥ ४१ ॥ नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी । न चाभिमानी न च हीनवृत्तो रूक्षां वाचं रुषतीं वर्जयीत ॥ ४२ ॥ मर्माण्यस्थीनि हृदयं तथाऽसून् रूक्षा वाचो निर्दहन्तीह पुंसाम् । तस्माद्वाचमुषतीमुग्ररूपां धर्मारामो नित्यशो वर्जयीत ॥ ४३ ॥ परश्चेदेनमभिविध्येत बाणैर्भृशं सुतीक्ष्णैरनलार्कदीप्तैः । स विध्यमानोऽप्यतिदह्यमानो विद्यात्कविः सुकृतं मे दधाति ॥ ४४ ॥ न द्विषन्तः क्षयं यान्ति यावज्जी-

वमपि घ्नतः । क्रोधमेव तु यो हन्ति तेन सर्वे द्विषो हताः ॥ ४५ ॥ क्षमावतामयं लोकः परश्चैव क्षमावताम् । इह सन्मानमृच्छन्ति परत्र च शुभां गतिम् ॥ ४६ ॥ क्षन्तव्यमेव सततं पुरुषेण विजानता । यदा हि क्षमते सर्वं ब्रह्म सम्पद्यते तदा ॥ ४७ ॥ संयच्छ क्रोधं भद्रं ते प्रतीपं श्रेयसां परम् । श्रुतेन भूयसा राजन् अगदेन यथाऽऽमयम् ॥ ४८ ॥ मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः । क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ ४९ ॥ क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने । क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम् ॥ ५० ॥ नातः श्रीमत्तरं किञ्चिदन्यत्पथ्यतमं तथा । प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ॥ ५१ ॥ क्षमेदशक्तः सर्वस्य शक्तिमान् धर्म्मकारणात् । अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ ५२ ॥ योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः । स तथा तप्यते मूढो ब्राह्मणो नकुलादिव ॥ ५३ ॥ सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते । सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ ५४ ॥ एको धर्म्मः परं श्रेयः क्षमैका शान्तिरुत्तमा । विद्यैका परमा तृप्तिरहिं-

सैका सुखावहा ॥ ५५ ॥ यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः । क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥५६॥ ये क्रोधं संनियच्छन्ति क्रुद्धान् संशमयन्ति च । न च कुप्यन्ति भूतानां दुर्गाण्यतितरन्ति ते ॥ ५७ ॥ एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ५८ ॥ सो ऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् । शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥ ५९ ॥ आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् । को ऽन्यो हिततरस्तस्माद्य एनं विनिवारयेत् ॥ ६० ॥

---

## सत्यप्रशंसा. ४

नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् । नहि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥ १ ॥ अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २ ॥ सत्ये कृत्वा प्रतिष्ठान्तु प्रवर्तन्ते प्रवृत्तयः । सत्यमेव गरीयस्तु शिष्टाचारसमन्वितम् ॥ ३ ॥ सत्यं मृदु प्रियं वाक्यं धीरो हितकरं वदेत् । आत्मोत्कर्षं तथा निन्दां परेषां परिवर्जयेत्

॥ ४ ॥ सत्यमेव व्रतं यस्य दया दीनेषु सर्वदा । कामक्रोधौ वशे यस्य स साधुः कथ्यतेबुधैः ॥५॥ सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते । तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥ ६ ॥ चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः । स्वधीता मनुजव्याघ्र सत्यमेकं किलैकतः ॥ ७ ॥ सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव । न पावनतमं किञ्चित्सत्यादध्यगमं क्वचित् ॥ ८ ॥ सत्यधर्मं समाश्रित्य यत्कर्म कुरुते नरः । तदेव सकलं कर्म सत्यं जानीहि सुव्रते ॥ ९ ॥ सत्यरूपं परं ब्रह्म सत्यं हि परमं तपः । सत्यमूलाः क्रियाः सर्वाः सत्यात्परतरं नहि ॥ १० ॥ सत्यञ्च समता चैव दमश्चैव न संशयः । अमात्सर्य्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ॥ ११ ॥ त्यागो ध्यानमथार्य्यत्वं धृतिश्च सततं दया । अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ १२ ॥ ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे । सत्यवादी हि लोकेऽस्मिन् परं गच्छति चाक्षयम् ॥१३॥ भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि । सत्यं समनुवर्तन्ते सत्यमेव भजेत्ततः ॥ १४ ॥ वरं कूपशताद्वापी वरं वापीशतात्क्रतुः । वरं क्रतुशतात्पुत्रः सत्यं

पुत्रशताद्वरम् ॥ १५ ॥ सर्ववेदाधिगमनं सर्वतीर्थावगाहनम्।
सत्यस्य वचनं राजन् समं वा स्यान्न वा समम् ॥ १६ ॥
यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्वदा । स वै सर्वमवाप्नोति
वेदान्तोपगतं फलम् ॥ १७ ॥ सत्यवाक्यादिमे सर्वे लौकिका
वैदिका अपि । व्यवहाराः प्रवर्तन्ते कालान्तरफलेष्वपि ॥
१८ ॥ अजातशत्रुप्रमुखाः सत्यवाक्याद्दिवं गताः । न च्यवन्ते
ततोऽद्यापि सत्यवादपरायणाः ॥१९॥ सत्यं वाचनिको धर्मो
यथादृष्टार्थवेदनम् । उक्तार्थतश्चाचलनमिदमुक्तं मनीषिभिः
॥२०॥ ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते । प्रमाण-
भूता भूतानां दुर्गाण्यतितरन्ति ते ॥ २१ ॥ सत्यं वेदेषु
जागर्ति फलं सत्ये परं स्मृतम् । सत्याद्धर्मो दमश्चैव सर्वं
सत्ये प्रतिष्ठितम् ॥२२॥ सत्यं साक्ष्ये ब्रुवन् साक्षी लोकाना-
प्नोति पुष्कलान् । इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता
॥ २३ ॥ न तत्त्ववचनं सत्यं नातत्त्ववचनं मृषा । यद्भूत-
हितमत्यन्तं तत्सत्यमिति कथ्यते ॥२४॥ असत्प्रलापं पारुष्यं
पैशुन्यमनृतं तथा । चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचि-
न्तयेत ॥ २५ ॥ सत्यहीना वृथा पूजा सत्यहीनो वृथा जपः

। सत्यहीनं तपो व्यर्थमूषरे वपनं यथा ॥ २६ ॥ समूल एष शुष्येत् स लोकद्वयफलं विना । अनृतं यो वदेत्क्वापि पुरुषः परिमोहितः ॥ २७ ॥ ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः । मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा ॥ २८ ॥ नासत्यवादिनः सख्यं न पुण्यं न यशो भुवि । दृश्यते नापि कल्याणं कालकूटमिवाश्नतः ॥ २९ ॥ मानाद्वा यदि वा लोभात्क्रोधाद्वा यदि वा भयात् । योऽन्यायादन्यथा ब्रूते स नरः पापमाप्नुयात् ॥ ३० ॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किन्तेन न कृतं पापं चौरेणात्माऽपहारिणा ॥३१॥ वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः । तान्तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥ ३२ ॥ नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः । अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ ३३ ॥ अवाक्-शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् । यः प्रश्नं वितथं ब्रूयात्पृष्टः सन् धर्मनिश्चये ॥ ३४ ॥ मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति । विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः ॥ ३५ ॥ यथार्थकथनं यच्च सर्वलोकसुखप्रदम् । तत्सत्यमिति

विज्ञेयमसत्यं तद्विपर्ययम्॥३६॥सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः । सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥ ३७ ॥ सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम् । सत्यं यज्ञः परः प्रोक्तः सर्वं सत्ये प्रतिष्ठितम् ॥ ३८ ॥ एकमेवाद्वितीयं यद्राजन्नाववुध्यसे । सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव॥ ३९ ॥ सत्येन रक्ष्यते धर्मो विद्याऽभ्यासेन रक्ष्यते । मृज्यया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ४० ॥ गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः । अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥ ४१ ॥ त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतम् । न द्रुह्येच्चैव दद्याच्च सत्यं चैव परं वदेत् ॥ ४२ ॥ सत्यस्य वचनं साधु न सत्याद्विद्यते परम् । सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥ ४३ ॥ सत्यार्जवं परं धर्ममाहुर्धर्मविदो जनाः । दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥४४॥ एकोऽहमस्मीत्यात्मानं यत्त्वं कल्याण मन्यसे । नित्यं स्थितस्ते हृदये पुण्यपापेक्षिता मुनिः ॥ ४५ ॥ सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥४६

॥ सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ४७ ॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् । धर्मो न वै यत्र च नास्ति सत्यं सत्यं न तद्यच्छलेनानुविद्धम् ॥ ४८ ॥ एकोऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् । यो वेदिता कर्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि ॥ ४९ ॥ असत्यमप्रत्ययमूलकारणं कुवासनासद्म समृद्धिवारणम् । विपन्निदानं परवञ्चनोर्जितं कृतापराधं कृतिभिर्विवर्जितम् ॥ ५० ॥

---

## वर्णधर्माः ५

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥ १ ॥ सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ २ ॥ येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र कुत्र च शायी स्यात्तन्देवा ब्राह्मणं विदुः॥ ३॥ योऽहिरिव

गणाद्भीतः सन्मानान्नरकादिव । कुणपादिव च स्त्रीभ्यस्तन्देवा ब्राह्मणं विदुः ॥ ४ ॥ निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणन्तं देवा० ॥ ५ ॥ क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम । यः क्रोधमोहौ त्यजति तन्देवा० ॥ ६ ॥ यो वदेदिह सत्यानि गुरुं संतोषयेत च । हिंसितश्च न हिंसेत तन्देवा० ॥ ७ ॥ जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः । कामक्रोधौ वशे यस्य तन्देवा० ॥ ८ ॥ योऽध्यापयेदधीयीत यजेद्वा याजयीत वा । दद्याद्वाऽपि यथाशक्ति तन्देवा० ॥ ९ ॥ ब्रह्मचारी च वेदान्योऽप्यधीयाद्द्विजपुङ्गवः । स्वाध्याये चाप्रमत्तो वै तन्देवा० ॥ १० ॥ न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः । सर्वभूतेष्वभयदस्तन्देवा० ॥ ११ ॥ जीवितं यस्य धर्मार्थं धर्मो हर्यर्थमेव च । अहोरात्राश्च पुण्यार्थन्तन्देवा ब्राह्मणं विदुः ॥१२॥ धर्मन्तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम् । इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम ॥ १३ ॥ स्वाध्यायेन जपैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ १४ ॥ दमं निःश्रेयसे प्राहुर्वृद्धा निश्चित-

दर्शिनः। ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ १५ ॥ दमस्तेजो वर्धयति पवित्रं दम उत्तमम्। विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् ॥ १६ ॥ ब्राह्मणस्य हि देहोऽयं क्षुद्र-कामाय नेष्यते। कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥ १७ ॥ नानृतं ब्राह्मणो ब्रूते न हन्ति प्राणिनं द्विजः। न सेवां कुरुते विप्रो न द्विजः पापकृद्भवेत् ॥ १८ ॥ शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ १९ ॥ अध्यापनमध्ययनं यजनं याजनन्तथा। दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥२०॥ त्रीणि कर्माणि जानीत ब्राह्मणानान्तु जीविका। याजना-ध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः ॥ २१ ॥ ज्ञानकर्मोपा-सनाभिर्देवताराधने रतः। शान्तो दान्तो दयालुश्च ब्राह्म-णश्च गुणैः स्मृतः ॥ २२ ॥ ये शान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः स्त्रीविषये निवृत्ताः। प्रतिग्रहे संकुचिताभिह-स्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ २३ ॥ नैतादृशं ब्राह्म-णस्यास्ति वित्तं यथैकता समता सत्यता च। शीलं स्थिति-र्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥२४॥ धर्मश्च

सत्यंच तपो दमश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया। दानं श्रुतं चैव धृतिः क्षमा च महाव्रता द्वादश ब्राह्मणस्य ॥ २५ ॥ शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ २६ ॥ कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः। त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥ २७ ॥ प्रजानां रक्षणं दानमिज्याध्ययनमेव च। विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ २८ ॥ शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ २९ ॥ लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी। दुष्टनिग्रहशीलो यः। स वै क्षत्रिय उच्यते ॥ ३० ॥ गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः। स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥ ३१ ॥ क्रयविक्रयकुशला ये नित्यं पण्यजीविनः। पशुरक्षाः कृषिकरास्ते वैश्याः कीर्तिता भुवि ॥ ३२ ॥ पशूनां रक्षणं दानमिज्याध्ययनमेव च। वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च ॥ ३३ ॥ कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्। परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥

३४ ॥ सर्वभक्ष्यरतिर्नित्यं सर्वकर्मकरोऽशुचिः । त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥३५॥ हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः । कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥ ३६ ॥ द्विजसेवाऽर्चनरताः शूराः शान्ता जितेन्द्रियाः । सीरकाष्ठतृणवहास्ते नीचा शूद्रसंज्ञिताः ॥ ३७ ॥ एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ ३८ ॥ त्यक्तस्वधर्माचरणा निर्घृणाः परपीडकाः । चण्डाश्च हिंसका नित्यं म्लेच्छास्ते ह्यविवेकिनः ॥ ३९ ॥ श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ४० ॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोअजायत ॥ ४१ ॥ ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति । तस्मै हव्यं न दातव्यं नहि भस्मनि हूयते ॥ ४२ ॥ श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते । एकेन विकलः काणो द्वाभ्यामन्धः परिकीर्तितः ॥ ४३ ॥ ऋषयो दीर्घसन्ध्यात्वाद्दीर्घमायुरवाप्नुयुः । प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च ॥ ४४ ॥ ब्राह्मणस्य तपो

ज्ञानं तपः क्षत्रस्य रक्षणम् । वैश्यस्य तपो वार्ता तपः शूद्रस्य सेवनम् ॥ ४५ ॥ नच वेदादृते किञ्चिच्छास्त्रं ब्रह्मविधायकम् । योऽन्यत्ररमते सोऽसौ न सम्भाष्यो द्विजातिभिः ॥ ४६ ॥ वेदबाह्यव्रताचाराः श्रौतस्मार्तबहिष्कृताः । पाखण्डिन इति ख्याता न सम्भाष्या द्विजातिभिः ॥ ४७ ॥ चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यंच सर्वं वेदात्प्रसिध्यति ॥ ४८ ॥ वेदार्थोपनिबन्धत्वात्प्राधान्यं हि मनोः स्मृतम् । मन्वर्थविप्रीता या सा स्मृतिर्नैव शस्यते ॥ ४९ ॥ जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् । व्यवहारं परिज्ञाय बध्यः पूज्योऽथवा भवेत् ॥ ५० ॥ न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव न । न च शूद्रो न वै म्लेच्छो भेदिता गुणकर्मभिः ॥ ५१ ॥ चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते । योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः ॥ ५२ ॥ विश्वामित्रो वसिष्ठश्च मतङ्गो नारदादयः । तपोविशेषैः संप्राप्ता उत्तमत्वं न जातितः ॥ ५३ ॥ ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् । अपि शूद्रञ्च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥ ५४ ॥ शृणु यक्ष कुलं

तात न स्वाध्यायो न च श्रुतम् । कारणं हि द्विजत्वे च वृत्तमेव न संशय ॥५५॥ शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् । क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥५६॥ अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः । अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति ॥ ५७ ॥ संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव । अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ ५८ ॥ तस्मादविद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात् । स्वल्पकेनाप्यविद्वान्हि पङ्के गौरिव सीदति ॥ ५९ ॥ यथा प्लवेनोपलेन निमज्जत्युदके तरन् । तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ ॥ ६० ॥ न वार्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे । न वकव्रतिके विप्रे नावेदविदि धर्मवित् ॥६१॥ त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्जितन्धनम् । दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥ ६२ ॥ धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः । वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥६३॥ अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतचरो द्विजः ॥ ६४ ॥ ये वकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः । ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा

॥ ६५ ॥ पश्य लक्ष्मण पम्पायां वकः परमधार्मिकः । शनैः शनैः पदन्धत्ते प्राणिनां बधशङ्कया ॥ ६६ ॥ वकः किं श्लाघ्यते राम येनाहं निष्कुलीकृता । सहवासी विजानाति चरितं सहवासिनः ॥ ६७ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः । यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥ ६८ ॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् । स जीवन्नेन शूद्रत्वमाशु गच्छति सान्वयः ॥ ६९ ॥ एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः । स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥ ७० ॥

---

## सन्ध्योपासन-प्रशंसा. ६

सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ १ ॥ ब्रह्मणोपासिता सन्ध्या विष्णुना शङ्करेण च । नोपास्ते कश्च तां देवीं सिद्धिकामो द्विजोत्तमः ॥ २ ॥ अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः । सा च सन्ध्या समाख्याता मुनिभिस्तत्त्ववादिभिः ॥ ३ ॥ जपन्नासीत सावित्रीं प्रत्यगातारको-

दद्यात् । सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥ ४ ॥ सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता । स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ ५ ॥ सन्ध्याहीनस्तु यो विप्रो ह्यन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ६ ॥ तस्मान्नित्यं प्रकर्तव्यं सन्ध्योपासनमुत्तमम् । तदभावेऽन्यकर्मादावधिकारो भवेन्नहि ॥ ७ ॥ नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स साधुभिर्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ ८ ॥ तस्मात्सर्वप्रयत्नेन सन्ध्योपास्तिं चरेद् द्विजः । अन्यथा शूद्रवद्भूयात्सर्वकार्येषु निन्दितः ॥ ९ ॥ तस्मान्न लङ्घयेत्सन्ध्यां सायं प्रातः समाहितः । उल्लङ्घयति यो मोहात्स याति नरकं ध्रुवम् ॥ १० ॥

---

## अतिथि-सत्कारः ७

संप्राप्ताय त्वतिथये प्रदद्यादासनोदके । अन्नं चैव यथा शक्ति सत्कृत्य विधिपूर्वकम् ॥ १ ॥ न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् । धन्यं यशस्यमायुष्यं स्वर्ग्यं चा-

तिथिभोजनम् ॥२॥ अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना । तथाऽऽसनप्रदानेन पादप्रक्षालनेन च ॥ ३ ॥ श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च । गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही ॥ ४ ॥ अभुक्त्वाऽतिथये चान्नं प्रयच्छेद्यः समाहितः । स वै ब्रह्मविदो लोकान् प्राप्नुयाद्भरतर्षभ ॥ ५ ॥ श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम् । अर्चयेद्भूतिमन्विच्छन् गृहस्थो गृहमागतम् ॥ ६ ॥ अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥ ७ ॥ न यज्ञैर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा । गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात् ॥ ८ ॥ यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते । श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ ९ ॥ नावमन्येदभिगतं न प्रणुद्यात्कथश्चन । अपि श्वपाके शुनि वा न दानं विप्रणश्यति ॥ १० ॥ तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ ११ ॥ यतिश्च ब्रह्मचारी च पक्कान्नस्वामिनावुभौ । तयोरन्नमदत्त्वा च भुक्त्वा चान्द्रायणं चरेत् ॥ १२ ॥ आसनावसथौ शय्या-

मनुव्रज्यामुपासनाम् । उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥ १३ ॥ योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च । तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये ॥ १४ ॥ काष्ठ-भारसहस्रेण घृतकुम्भशतेन च । अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः ॥ १५ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रति-निवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ १६ ॥ अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञ-शिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥ १७ ॥ यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १८ ॥ उपासते ये गृहस्थाः परपा-कमबुद्धयः । तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् ॥ १९ ॥ मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ २० ॥

———

# ब्रह्मचर्यम् ८

ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति । आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥ १ ॥ ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत । इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत ॥ २ ॥ धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम् । अनुमोदामहे ब्रह्मचर्यमेकान्तनिर्मलम् ॥ ३ ॥ ब्रह्मचर्यं परं शौचं ब्रह्मचर्यं परन्तपः । ये स्थिता ब्रह्मचर्येण ब्राह्मणास्ते दिवं गताः ॥ ४ ॥ समुद्रतरणे यद्वदुपायो नौः प्रकीर्तिता । संसारतरणे तद्वद्ब्रह्मचर्यं प्रकीर्तितम् ॥ ५ ॥ नीरोगः कान्तिसम्पन्नः सर्वदुःखविवर्जितः । ब्रह्मचारी भवेल्लोके पाप्मना च विवर्जितः ॥ ६ ॥ किं बहूक्तेन लोकेऽस्मिन्साधनं यद्धि विद्यते । ब्रह्मचर्ये तु तत्सर्वमन्तर्भवति सर्वथा ॥ ७ ॥ यथा गजपदे सर्वे पादा अन्तर्भवन्ति हि । नैतस्मादधिकं किञ्चिद् ब्रह्मचर्याद्धि विद्यते ॥ ८ ॥ सर्वसाधनसम्पन्ना ब्रह्मचर्यविवर्जिताः । क्लेशं हि मुनयो भेजुर्विद्वांसोऽपि च कोटिशः ॥ ९ ॥ कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते ॥ १० ॥ आजन्ममरणाद्यस्तु ब्रह्मचारी भवे-

दिह । न तस्य किञ्चिदप्राप्यमिति विद्धि नराधिप ॥११॥ ये तपश्च तपस्यन्ति कौमारा ब्रह्मचारिणः । विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥ १२ ॥ सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते । सुखं पर्य्येति लोकांश्च मनश्चास्य प्रसीदति ॥ १३ ॥ अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते । अनर्थांश्च बहूनन्यान् प्रसृजत्यात्मदोषजान् ॥ १४ ॥ इन्द्रियाणां विचरतां विषयेष्वपहारिषु । संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥ १५ ॥ आपदां कथितः पन्था इन्द्रियाणामसंयमः । तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ १६ ॥ धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः । श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥१७॥ जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः । मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १८ ॥ तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् । न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ १९ ॥ आस्वाद्यस्य हि सर्वस्य जिह्वाऽग्रे क्षणसङ्गमः । कण्ठनाडीमतीतं च सर्वं चैवाशनं समम् ॥ २० ॥ एकः शयीत सर्वत्र न रेतः स्कन्दयेत् कचित् ।

कामाद्धि स्कन्दयन् रेतो हिनास्ति व्रतमात्मनः ॥ २१ ॥ आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महायशः। पुण्यं सुप्रीतिमत्त्वं च हन्यतेऽब्रह्मचर्यया ॥ २२ ॥ ब्रह्मचर्यं परो धर्मः स चापि नियतस्त्वयि । यस्मात्तस्मादहं पार्थ रणेऽस्मिन्विजितस्त्वया ॥ २३ ॥ यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः । न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥ २४ ॥ आहारशयनब्रह्मचर्यैर्युक्त्या प्रयोजितैः । शरीरं धार्यते नित्यमागारमिव धारणैः ॥ २५ ॥ इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ २६ ॥ यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ २७॥ वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा । सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् ॥२८॥ इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् । संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥ २९ ॥ इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च । अहिंसया च भूतानाममृतत्वायकल्पते ॥ ३० ॥

---

# दान-धर्माः १

दानतो वैरिणोऽपि स्युर्मित्राण्येव न संशयः । दाने सर्वमिदं विश्वं प्रतितिष्ठति सर्वदा ॥ १ ॥ प्रशंसन्ति प्रजा नित्यं कर्णबल्यादिकानिह । वदान्या दानतः स्वर्गं व्रजन्ति सततं नराः ॥ २ ॥ यज्ञाः संपूर्णतां यान्ति दानतो दक्षिणात्मनः । दातारं सर्वभूतानि श्रयन्ति पितरं यथा ॥ ३ ॥ दानेन प्राप्यते स्वर्गो दानेन सुखमश्नुते । इहामुत्र च दानेन पूज्यो भवति मानवः ॥ ४ ॥ दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम् । परोऽपि बन्धुत्वमुपैति दानैर्दानं हि सर्वव्यसनानि हन्ति ॥ ५ ॥ न दानतः किञ्चिदिहान्यदस्ति जनस्य दुःखक्षतये निमित्तम् । संवर्धनीयं तदतः प्रयत्नान्निरन्तरं मित्रमित्रोपकारि ॥ ६ ॥ गौरवं प्राप्यते दानान्न तु वित्तस्य संचयात् । स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥ ७ ॥ यद्ददाति यदश्नाति तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ ८ ॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने । तत्ते वित्तमहं

# दुर्जनपद्धतिः १७

दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम् । मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ १ ॥ सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः । सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ २ ॥ खलो न साधुतां याति सद्भिः संबोधितोऽपि सन् । सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ॥ ३ ॥ दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना । अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ ४ ॥ उपकारोऽपि नीचानामपकारो हि जायते । पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ॥ ५ ॥ दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् । मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ ६ ॥ सद्भिः संबोध्यमानोऽपि दुरात्मा पापपूरुषः । घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥ ७ ॥ खलः सर्षपमात्राणि परछिद्राणि पश्यति । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ ८ ॥ स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः । हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ ९ ॥ न विना परवादेन रमते दुर्जनो जनः । काकः सर्वरसान् भुङ्क्ते विनाऽमेध्यं न तृप्यति

॥ १० ॥ दुर्जनैरुच्यमानानि वचांसि मधुराण्यपि । अकाल-कुसुमानीव भयं संजनयन्ति मे ॥ ११ ॥ दुर्जनो दोषमादत्ते दुर्गन्धमिव सूकरः । सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः ॥ १२ ॥ दुर्जनेन समं सख्यं प्रीतिश्चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ १३ ॥ दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाऽग्रे हृदि हालाहलं विषम् ॥ १४ ॥ वर्जनीयो मति-मता दुर्जनः सख्यवैरयोः । श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ १५ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥ १६ ॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् । व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ १७ ॥ अशक्ताः शक्ति-मात्मीयां श्लाघन्ते खलु दुर्जनाः । ते भवन्त्युपहासाय महता-मेव सन्निधौ ॥१८॥ अहो वत महत्कष्टं विपरीतमिदं जगत् । येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ १९ ॥ मनस्यन्य-द्वचस्यन्यत्कार्ये चान्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं सदात्मनाम् ॥ २० ॥ खलः करोति दुर्वृत्तं नूनं

फलति सङ्गिषु । दशाननोऽहरत्सीतां बन्धनञ्च महोदधेः ॥ २१ ॥ न देवाय न धर्माय न बन्धुभ्यो न चार्थिने । दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ॥ २२ ॥ मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदयं क्रोधसंयुक्तं त्रिविधं धूर्तलक्षणम् ॥२३॥ का पुरुषः कुक्कुरश्च भोजनैक-परायणः । लालितः पार्श्वमायाति वारितो न च गच्छति ॥ २४ ॥ दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् । मलिनी-कुरुते धूमः सर्वथा विमलाम्बरम् ॥२५॥ खलानां कण्टकानाञ्च द्विविधैव प्रतिक्रिया । उपानन्मुखभङ्गो वा दूरतो वाऽपि वर्जनम् ॥ २६ ॥ दुर्जनः स्वस्वभावेन परकार्यं विनश्यति । नोदरतृप्तिमायाति मूषको वस्त्रभक्षकः ॥ २७ ॥ संत्यज्य शूर्पवद्दोषान् गुणान् गृह्णाति पण्डितः । दोषग्राही गुणत्यागी पल्लोलीव हि दुर्जनः ॥ २८ ॥ यस्मिन्वंशे समुत्पन्नस्तमेव निजचेष्टितैः । दूषयत्यचिरेणैव घुणकीट इवाधमः ॥ २९ ॥ तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः । वृश्चिकस्य विषं पुच्छे सर्वाङ्गे दुर्जनो विषम् ॥ ३० ॥ शतं दद्यान्न विवदेदिति विज्ञस्य संमतम् । विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य

लक्षणम् ॥ ३१ ॥ अभिवाद्य यथा वृद्धान्सन्तो गच्छन्ति निर्वृतिम् । एवं सज्जनमाक्रुश्य नीचो भवति निर्वृतः ॥ ३२ ॥ अन्यान्परिवदन्साधुर्यथा हि परितप्यते । तथा परिवदन्न्यांस्तुष्टो भवति दुर्जनः ॥ ३३ ॥ पापः कण्ठगतप्राणोऽप्यभिनन्दति पापिनम् । द्रोणिं प्रसुप्तबालघ्नं पांसुभुक्कुकुराडिव ॥३४॥ स्तोकेनोन्नतिमायाति स्तोकेनायात्यधो गतिम् । अहो सुसदृशी चेष्टा तुलायष्टेः खलस्य च ॥ ३५ ॥ निष्णातोऽपि च वेदान्ते वैराग्यं नैति दुर्जनः । चिरं जलनिधौ मग्नः पाषाण इव मार्दवम् ॥ ३६ ॥ येषां प्राणिवधः क्रीडा नर्ममर्मच्छिदो गिरः । कार्यं परोपतापित्वं ते मृत्योरपि मृत्यवः ॥ ३७ ॥ यथा परोपकारेषु नित्यं जागर्ति सज्जनः । तथा परापकारेषु जागर्ति सततं खलः ॥ ३८ ॥ प्रायः परोपतापाय दुर्जनः सततोद्यतः । अवश्यकरणीयत्वान्न कारणमपेक्षते ॥ ३९ ॥ अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः । शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥४०॥ मृद्घटवत्सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति । सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु सन्धेयः ॥ ४१ ॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति

पापम् । तं जनमसत्यसन्धं भगवति वसुधे कथं वहसि ॥४२॥ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते । पवनाशिनोऽपि भुजगाः परपरितापं न मुञ्चन्ति ॥ ४३ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव ते केन वेधसा सृष्टाः ॥ ४४ ॥ मृगमीन-सज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् । लुब्धकधीवर-पिशुना निष्कारणवैरिणो जगति ॥ ४५ ॥ परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥ ४६ ॥ अर्थग्रहणे न तथा व्यथयति कटुकूजितैर्यथा पिशुनः । रुधिरादानादधिकं दुनोति कर्णे क्वणन्मशकः ॥ ४७ ॥ अतिमलिने कर्त्तव्ये भवति खलानामतीव निपुणा धीः । तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ ४८ ॥ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः। तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ॥४९॥ दुर्जनदूषितमनसां सुजनेऽपि नास्ति विश्वासः । पाणौ पयसा दग्धे तक्रं फूत्कृत्य बालकः पिबति ॥ ५० ॥ गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमा-

दत्ते । पुष्पे फले विरागी क्रमेलकः कण्टकौघमिव ॥ ५१ ॥
रविरपि न दहति तादृग्यादृक्संदहति वालुकानिकरः ।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ ५२ ॥
सत्त्वाऽपि निजप्राणान् परहितविघ्नं खलः करोत्येव । कवले
पतिता सद्यो वमयति खलु मक्षिकाऽन्नभोक्तारम् ॥ ५३ ॥
अतिरमणीये काव्ये पिशुनजनोऽन्वेषयति दूषणान्येव ।
अतिरमणीये वपुषि व्रणमेव मक्षिकानिकरः ॥ ५४ ॥ शोकं
मा कुरु कुक्कुर सत्त्वेष्वहमधम इति वृथा साधो । कष्टादपि
कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ५५ ॥ महतस्तरसा
विलङ्घयन्निजदोषेण कुधीर्विनश्यति । कुरुते न खलु स्वये-
च्छया शलभानिन्धनमिद्धदीधितिः ॥ ५६ ॥ कतिपयदिव-
सस्थायिनि मदकारिणि यौवने दुरात्मानः । विदधति तथा-
ऽपराधं जन्मैव यथा वृथा भवति ॥ ५७ ॥ परितोषयिता
न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः । परदोषकथा-
भिरल्पकः स्वजनं तोषयितुं किलेच्छति ॥ ५८ ॥ नलिका-
गतमपि कुटिलं न भवति सरलं शुनः पुच्छम् । तद्वत्खल-
जनहृदयं बोधितमपि नैव याति माधुर्यम् ॥५९॥ उपकारपरः

स्वभावतः सततं सर्वजनस्य सज्जनः । असतामनिशं तथा-
प्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥६०॥ अपि वेत्ति षडक्षरा-
णि चेदुपदेष्टुं शितिकण्ठमिच्छति । वसनाशनमात्रमस्ति
चेद्धनदादप्यतिरिच्यते खलः ॥ ६१ ॥ अहमेव गुरुः सुदारु-
णानामिति हालाहल मा स्म तात दृप्यः । ननु सन्ति
भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥६२॥
कर्णामृतं सूक्तिरसं विमुच्य दोषेषु यत्नः सुमहान् खलस्य ।
अवेक्षते केलिवनं प्रविष्टः क्रमेलकः कण्टकजालमेव ॥६३॥
न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथाऽतिरिच्यते यथा प्रकृत्या मधुरं गवां पयः
॥ ६४ ॥ अकरुणत्वमकारणविग्रहः परधने परयोषिति च
स्पृहा । सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि
दुरात्मनाम् ॥ ६५ ॥ विविनक्ति न बुद्धिदुर्विधः स्वयमेव
स्वहितं पृथग्जनः । यदुदीरितमप्यदः परैर्न विजानाति तद-
द्भुतं महत् ॥ ६६ ॥ विदुरेष्यदपायमात्मना परतः श्रद्दधते-
ऽथवा बुधाः । न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृ-
तेऽल्पधीः ॥ ६७ ॥ न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि

सेव्यमानः । भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥६८॥ न जारजातस्य ललाटशृङ्गं कुलप्रसूतस्य न पाणिपद्मम् । यदा यदा मुञ्चति वाक्यबाणं तदा तदा जातिकुलप्रमाणम् ॥ ६९ ॥ बोधितोऽपि बहुसूक्तिविस्तरैः किं खलो जगति सज्जनो भवेत् । स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत्कचित् ॥७०॥ नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम् । नीडं शकुन्ता इव जातपक्षाश्छन्दास्येनं प्रजहत्यन्तकाले ॥ ७१ ॥ निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति । अकारणद्वेषि मनस्तु यस्य वै कथं जनस्तं परितोषयिष्यति ॥ ७२ ॥ तथाऽरिभिर्न व्यथते शिलीमुखैर्हतो दिगन्ते हृदयेन दूरतः । यथा खलानां कुधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ ७३ ॥ उद्भासिताखिलखलस्य विशृङ्खलस्य प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः । दैवादवाप्तविभवस्य गुणद्विषोऽस्य नीचस्य गोचरगतैः सुखमाप्यते कैः ॥ ७४ ॥ एकः खलोऽपि यदि नाम भवेत्सभायां मोघीकरोति विदुषां निखिलप्रयासम् । एकाऽपि

पूर्णमुदरं मधुरैः पदार्थैरालोड्य रेचयति हन्त न मक्षिका किम् ॥७५॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पालकानपि निहन्ति बलेन सिंहः । दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेयः ॥७६॥ प्राक् पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम् । छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥७७॥ ते वै सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परोपकारनिरताः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥७८॥ नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति । किञ्चित्क्वापि न साहसं वितनुते देहे चिरं दूयते नो वा विदन्ति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥७९॥ कस्त्वं भद्र खलेश्वरोऽहमिह किं घोरे वने स्थीयते शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया । कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वान्नरान् ॥८०॥

# गुरुमहिमा १८

अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २ ॥ एते वेदोदिताः सर्वे पुरुषार्थाश्चतुर्विधाः । गुरुभक्तस्य हस्तस्था भवन्त्यत्र न संशय ॥ ३ ॥ प्रष्टव्या गुरवो नित्यं ज्ञातोऽप्यर्थो यदि स्वयम् । स तैर्निश्चयमानीतो ददाति परमं सुखम् ॥ ४ ॥ यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान् स्वहितान् गुरून् । न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ५ ॥ यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् । तावन्न सद्गुरुं कश्चित्सच्छास्त्रं वाऽपि नो लभेत् ॥ ६ ॥ उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता । ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ ७ ॥ यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः । आदौ ज्ञानप्रसिद्ध्यर्थं कृतघ्नत्वापनुत्तये ॥ ८ ॥ पिता ह्येनं जनयति पुरुषं पुरुषर्षभ । प्रज्ञां ददाति चाचार्यस्तस्मात्स गुरुरुच्यते ॥ ९ ॥ अज्ञो भवति वै बालः पिता भवति मन्त्रदः । अज्ञं हि बालमित्याहुः पितेत्येव तु

मन्त्रदम् ॥ १० ॥ न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ११ ॥ न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥ १२ ॥ उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ १३ ॥ आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यः परिकीर्त्यते ॥ १४ ॥ सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा । शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतः ॥ १५ ॥ अहिंसयैव हि भूतानां कार्यं श्रेयोऽनुशासनम् । वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥१६॥ यः समः सर्वभूतेषु विरागी गतमत्सरः । जितेन्द्रियः शुचिर्दक्षः सदाचारसमन्वितः ॥ १७ ॥ समबुद्धिः पदप्राप्तस्तत्रापि भगवन्मयः । कर्मणा मनसा वाचा भीतेष्वभयप्रदः ॥ १८ ॥ सत्यं गृणाति शिष्येभ्य इत्येवं यो निरुच्यते । हितोपदेशकश्चैव गुरुशब्दार्थ एव सः ॥ १९ ॥ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २० ॥ अत्र सर्वासु विद्यासु

कारणं गुरुरीरितः। यथा शिवस्तथैवायं पूजनीयः प्रयत्नतः ॥ २१ ॥ गुरुभ्यस्त्वासनं देयमभिवाद्याभिपूज्य च। गुरुमभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया ॥ २२ ॥ य आवृणोत्यवितथं ब्राह्मणः श्रवणावुभौ। स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन ॥२३॥ नोदाहरेदस्य नाम परोक्षमपि केवलम्। न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ २४ ॥ विद्याऽभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः। अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ २५ ॥ अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः। तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ २६ ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ २७ ॥ कर्णाभ्यां शृणुयात्तद्वद्गुरुकीर्तिश्च सर्वदा। दोषवक्तुर्यथाशक्ति कुर्यात्परिभवं सदा ॥२८॥ यत्रात्मनो गुरोर्निन्दा क्रियते पापमोहितैः। तत्र कर्णौ पिधायैव स्थेयं शक्या गतिर्न चेत् ॥ २९ ॥ परीवादात्खरो भवति श्वा वै भवति निन्दकः। परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥ ३० ॥ येन पृणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम्। मातृतः पितृतश्चैव

तस्मात्पूज्यतमो गुरुः ॥३१॥ एकमेवाक्षरं यस्तु गुरुः शिष्यं प्रबोधयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा चानृणी भवेत् ॥ ३२ ॥ नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ । गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ ३३ ॥ यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ । मनुष्य इति दुर्बुद्धिस्तस्य सर्वं निरर्थकम् ॥ ३४ ॥ यो ह्यधर्मेण वै ब्रूयाद्गृह्णीयाद्योऽप्यधर्मतः । हीयेतां तावुभौ क्षिप्रं स्यातां वा वैरिणावुभौ ॥३५॥ कृतघ्नानां हि ये लोका ये लोका ब्रह्मघातिनाम् । मृत्वा तानभिसंयाति गुरुद्रोहपरो नरः ॥ ३६ ॥ त्यजेद्धर्मं दयाहीनं विद्याहीनं गुरुं त्यजेत् । त्यजेत्क्रोधमुखीं भार्यां निःस्नेहान्बान्धवांस्त्यजेत् ॥ ३७ ॥ गुरवो विरलाः सन्ति शिष्यसन्तापहारकाः । गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ॥३८॥ परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ ३९ ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ ४० ॥

## मित्रप्रशंसा १९

मित्रवान्साधयत्यर्थान् दुःसाध्यानपि वै यतः । तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥ १ ॥ आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः । न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ २ ॥ कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी । अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते ॥ ३ ॥ यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः । मित्रेण सह यो भुङ्क्ते ततो नास्तीह पुण्यवान् ॥ ४ ॥ शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयो । दाक्षिण्यञ्चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ ५ ॥ स्वाभाविकन्तु यन्मित्रं भाग्येनैवाभिजायते । तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ ६ ॥ न मातरि न दारेषु न सोदर्ये न चात्मनि । विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥ ७ ॥ व्याधितस्यार्थहीनस्य देशान्तरगतस्य च । नरस्य शोकदग्धस्य सुहृद्दर्शनमौषधम् ॥ ८ ॥ किञ्चन्दनैः सकर्पूरैः तुहिनैः किञ्च शीतलैः । सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥ ९ ॥ शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्र-

मित्यक्षरद्वयम् ॥ १० ॥ कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् । जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ॥११॥ औरसं कृतसंबन्धं तथा वंशक्रमागतम् । रक्षकं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ १२ ॥ शीलं शौर्यमनालस्यं पाण्डित्यं मित्रसंग्रहः । अचोरहरणीयानि पञ्चैतान्यक्षयो निधिः ॥ १३ ॥ धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा । मित्राणाञ्चानभिद्रोहः सप्तैताः समिधः श्रियः ॥ १४ ॥ आकेशग्रहणान्मित्रमकार्यात्संनिवर्तयन् । अवाच्यः कस्यचिल्लोके कृतयत्नो यथाबलम् ॥१५॥ व्यसने क्लिश्यमानं यो स्वमित्रं नाभिपद्यते । अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ १६ ॥ आर्तिरार्ते प्रिये प्रीतिरेतावन्मित्रलक्षणम् । विपरीतन्तु बोद्धव्यमरिलक्षणमेव तत् ॥ १७ ॥ ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥१८॥ मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । तत्रापि संभवन्त्येते मित्रोदासीनशत्रवः ॥१९॥ माता मित्रं पिता चेति स्वभावात्रितयं हितम् । कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ २० ॥ सुहृदां हितकामानां यः शृणोति

न भाषितम् । विपत्संनिहिता तस्य स नरः शत्रुनन्दनः ॥ २१ ॥ दीपनिर्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीम् । न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥२२॥ इच्छेच्चेद्विपुलां मैत्रीं त्रीणि तत्र न कारयेत् । वाग्वादमर्थसंबन्धं तत्पत्नीपरिभाषणम् ॥ २३ ॥ सर्वथा सुकरं मित्रं दुष्करं प्रीतिपालनम् । अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥२४॥ यथा पुष्करपत्रेषु पतितास्तोयबिन्दवः । न श्लेषमभिगच्छन्ति तथाऽनार्येषु सौहृदम् ॥ २५ ॥ प्रत्यक्षे गुणवादी यः परोक्षे चापि निन्दकः । स मानवः श्वबल्लोके नष्टलोकपरायणः ॥ २६ ॥ परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् । वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ २७ ॥ अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च । तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः २८ रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता । क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥२९॥ मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः । ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ३० सकृद्दुष्टं च मित्रं यः पुनः सन्धातुमिच्छति । स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥३१॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्य-

चिद्रिपुः । कारणेन हि जायन्ते मित्राणि रिपवस्तथा ॥३२॥ कश्चित्स्वभावतो मित्रं शत्रुश्चापि स्वभावतः । भवन्ति सामदानाभ्यां शत्रवश्चाप्यवैरिणः ॥ ३३ ॥ तदेवास्य परं मित्रं यत्र संक्रामति द्वयम् । दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे ॥ ३४ ॥ विद्या शौर्यं च दाक्ष्यं च बलं धैर्य्यं च पञ्चमम् । मित्राणि सहजान्याहुर्वर्त्तयन्ति हि तैर्बुधाः ॥३५॥ एकशीलवयोविद्याजातिव्यसनवृत्तितः । साहचर्याद्भवेन्मित्रमेभिर्यदि तु सार्जवैः ॥ ३६ ॥ दूरादवेक्षणं हासः संप्रश्नेष्वादरो भृशम् । परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु ॥ ३७ ॥ धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च । अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥ ३८ ॥ आत्मस्त्रीधनगुह्यानां शरणं समये सहृत । प्रोक्तोऽयमुत्तमोऽन्यश्च द्वित्रैकपदमित्रकः ॥ ३९ ॥ विवादो धनसंबन्धो याचनं स्त्रीषु संगतिः । आदानमग्रतः स्थानं मैत्रीभङ्गस्य हेतवः ॥ ४० ॥ स राघवेन्द्रो हृतराज्यदारः स वानरेन्द्रो हृतराज्यदारः । एवं तयोरध्वनि दैवयोगात्समानशीलव्यसनेषु सख्यम् ॥ ४१ ॥ मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः ।

मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥ ४२ ॥ आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् । दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खल-सज्जनानाम् ॥ ४३ ॥ मुखं प्रसन्नं विमला च दृष्टिः कथा-ऽनुरागो मधुरा च वाणी । स्नेहोऽधिकं सम्भ्रमदर्शनञ्च सदाऽनुरक्तस्य जनस्य लक्ष्म ॥ ४४ ॥ अदृष्टिदानं कृत-पूर्वनाशनममाननं दुश्चरितानुकीर्तनम् । कथाप्रङ्गेन च नाम-विस्मृतिर्विरक्तभावस्य जनस्य लक्षणम् ॥ ४५ ॥ उत्कृष्टम-ध्यमनिकृष्टजनेषु मैत्री यादृक् शिलासु सिकतासु जलेषु रेखा । वैरं पुनस्त्वधममध्यमसज्जनानां यादृक् शिलासु सिकतासु जलेषु रेखा ॥ ४६ ॥ पापान्निवारयति योजयते हिताय गुह्यानि गूहति गुणान्प्रकटीकरोति । आपद्गतञ्च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ४० ॥ यः प्रीणयेत्सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हित-मिच्छति तत्कलत्रम् । तन्मित्रमापदि सुखे च समक्रियं यदे-तत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ४८ ॥ मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः पात्रं यत्सुखदुःखयोः सह भवेन्मि-

त्रेण तद्दुर्लभम् । ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलास्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥ ४९ ॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ ५० ॥

---

## उदारप्रशंसा २०

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ १ ॥ दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि । जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ २ ॥ अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ ३ ॥ याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान्भवेत् । तं दृष्ट्वाऽप्यथवा श्रुत्वा नरः पुण्यमवाप्नुयाव ॥ ४ ॥ कर्णस्त्वचं शिविर्मांसं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ ५ ॥ युध्यन्ते पक्षिपशवः पठन्ति शुक-

सारिकाः । दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥ ६ ॥ रक्षन्ति कृपणाः पाणौ द्रव्यं प्राणमिवात्मनः । तदेव सन्तः सततमुत्सृजन्ति यथा मलम् ॥ ७ ॥ दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति । अदाता हि धनत्यागी धनं हित्वा हि गच्छति ॥ ८ ॥ निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति । परार्थे भारवाहीव क्लेशस्यैव हि भाजनम् ॥ ९ ॥ त्यागभोगविहीनेन धनेन धनिनो यदि । भवामः किन्न तेनैव धनेन धनिनो वयम् ॥ १० ॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै । स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ११ ॥ लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया । दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥१२॥ यदधोऽधः क्षितौ वित्तं निचखान मितम्पचः । तदधो निरयं गन्तुं चक्रे पन्थानमग्रतः ॥ १३ ॥ किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः । अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ॥१४ ॥ उपभोगकातराणां पुरुषाणामर्थसंचयपराणाम् । कन्यामणिरिव सदने तिष्ठत्यर्थः परस्यार्थे ॥ १५ ॥ प्राप्तानपि न लभन्ते भोगान् भोक्तुं स्वकर्मभिः कृपणाः । मुखपाकः

किल भवति द्राक्षापाके बलिभुजां हि ॥ १६ ॥ दैववशादुत्पन्ने सति विभवे यस्य नास्ति भोगेच्छा । न च परलोकसमीहा स भवति धनपालको मूर्खः ॥ १७ ॥ अतिसाहसमतिदुष्करमत्याश्चर्यञ्च दानमर्थानाम् । योऽपि ददाति शरीरं न ददाति स वित्तलेशमपि ॥ १८ ॥ मा धनानि कृपणः खलु जीवंस्तृष्णयाऽर्पयतु जातु परस्मै । तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ॥ १९ ॥ यदेते साधूनामुपरि विमुखाः सन्ति धनिनो न चैषाऽवज्ञैषामपि तु निजवित्तव्ययभयम् । अतः खेदो नास्मिन्परमनुकम्पैव भवति स्वमांसत्रस्तेभ्यः क इह हरिणेभ्यः परिभवः ॥२०॥

## सत्सङ्गप्रशंसा २१

साधुसङ्गतयो लोके सन्मार्गस्य च दीपिकाः । हार्दान्धकारहारिण्यो भासो ज्ञानविवस्वतः ॥ १ ॥ मोहजालस्य योनिर्हि मूढैरेव समागमः । अहन्यहनि धर्मस्य योनिः साधुसमागमः ॥ २ ॥ महाजनस्य संसर्गः कस्य नोन्नतिकारकः । पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥३॥ मलयाचलगन्धेन त्विन्धनञ्चन्दनायते । तथा सज्जनसङ्गेन दुर्जनः

सज्जनायते ॥ ४ ॥ करोति निर्मलाधारस्तुच्छस्यापि महार्घताम् । अम्बुनो बिन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ५ ॥ हीयते हि मतिस्तात हीनैः सह समागमात् । समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ ६ ॥ काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः । तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ ७ ॥ संभाषा दर्शनं स्पर्शः कीर्तनं स्मरणं तथा । पावनानि किलैतानि साधूनामिति शुश्रुम ॥ ८ ॥ शून्यमापूर्णतामेति मृत्युरप्यमृतायते । आपत्संपदिवाभाति विद्वज्जनसमागमात् ॥ ९ ॥ यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि । अथ दुर्जनसंसर्गे पतिष्यसि पतिष्यसि ॥ १० ॥ सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥ ११ ॥ क्षुद्रोऽपि तनुते तात तेजस्तेजस्विसङ्गतः । अर्कसम्पर्कतः पश्य दर्पणे दहनद्युतिम् ॥१२॥ सन्तः सदैव गन्तव्या यद्यप्युपदिशन्ति न । या हि स्वैरकथास्तेषामुपदेशा भवन्ति ताः ॥ १३ ॥ अनपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः ॥ १४ ॥ यथोपश्रयमाणस्य भगवन्तं

विभावसुम् । शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥१५ ॥ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् । सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥१६॥ सज्जनसङ्गो माभूद्यदि सङ्गो माऽस्तु तत्पुनः स्नेहः । स्नेहो यदि मा विरहो यदि विरहो माऽस्तु जीवितस्याशा ॥१७॥ वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः । नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ १८ ॥ रे जीव सत्सङ्गमवाप्नुहि त्वमसत्प्रसङ्गं त्वरया विहाय । धन्योऽपि निन्दां लभते कुसङ्गात्सिन्दूरबिन्दुर्विधवाललाटे ॥ १९ ॥ असारसंसारपयोऽब्धिमध्ये निमज्जतां सद्भिरुदारवृत्तैः । महात्मभिः सङ्गतिरेव साध्या नान्यस्तदुत्तारविधावुपायः ॥ २० ॥ सुजनः सुजनेन सङ्गतः परिपुष्णाति मतिं शनैः शनैः । परिपुष्टमतिर्विवेकवाञ्छनकैर्हेयगुणं विमुञ्चति ॥२१ ॥ महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् । महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥ २२ ॥ सत्सङ्गाद्भवति हि साधुता खलानां साधूनां नहि खलसङ्गात्खलत्वम् । आमोदं कुसुमभवं मृदेव धत्ते

मृद्गन्धं नहि कुसुमानि धारयन्ति ॥ २३ ॥ किं वा परेण बहुना परिजल्पितेन संसर्ग एव महतां महते फलाय । अम्भोनिधेस्तटरुहास्तरवोऽपि येन वेलाजलोच्छलितरत्नकृतालवालाः ॥ २४ ॥ जाड्यं धियो हरति सिञ्चति वाचि सत्यं मानोन्नतिं दिशति पापमपाकरोति । चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्सङ्गतिः कथय किन्न करोति पुंसाम् ॥ २५ ॥ दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरन्तनमघं चुलुकीकरोति । भूतेषु किञ्च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥ २६ ॥ कान्तारभूमिरुहमौलिनिवासशीलाः प्रायः पलायनपरा जनवीक्षणेन । कूजन्ति तेऽपि हि शुकाः खलु रामनाम सङ्गः स्वभावपरिवर्तविधौ निदानम् ॥२८॥ भाग्योदयेन बहुजन्मसमार्जितेन सत्सङ्गमञ्च लभते पुरुषो यदा वै । अज्ञानहेतुकृतमोहमदान्धकारनाशं विधाय हि तदोदयते विवेकः ॥ २८ ॥ एके केचिद्व्यतिकरगताः पात्रसंज्ञां लभन्ते गायन्त्यन्ये सरसमधुरवीणया संप्रयुक्ताः । एके तेषां सहगतिवशाद्दुस्तरं तारयन्ति केचित्तेषां ज्वलितहृदया रक्तमेवापिबन्ति ॥२९॥ संतप्तायसि संस्थितस्य

पयसो नामापि न श्रूयते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते॥३०॥

## असत्सङ्गाद्धानिः २२

अहो दुर्जनसंसर्गान्मानहानिः पदे पदे । पावको लोहसङ्गेन मुद्गरैरभिहन्यते ॥ १ ॥ असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् । दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥२॥ न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह । पयोऽपि शौण्डिकीहस्ते मदिरां मन्यते जनः ॥ ३ ॥ बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् । मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमैः ॥ ४ ॥ अणुरप्यसतां सङ्गः सद्गुणं हन्ति विस्तृतम् । गुणरूपान्तरं याति तक्रयोगाद्यथा पयः ॥ ५ ॥ असत्सङ्गाद्गुणज्ञोऽपि विषयासक्तमानसः । अकस्मात्प्रलयं याति गीतरक्तो यथा मृगः ॥ ६ ॥ आहृत्य रक्ष्यमाणापि यत्नेनान्तविरागिणी । असन्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा ॥ ७ ॥ परापकारनिरतैर्दुर्जनैः सह सङ्गतिः । वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ ८ ॥ सद्भिरेव

सहासीत सद्भिः कुर्वीत सङ्गतिम् । सद्भिर्विवाहं मैत्रीं च नासद्भिः किञ्चिदाचरेत् ॥ ९ ॥ दुर्वृत्तसङ्गतिरनर्थपरम्पराया हेतुः सतां भवति किं वचनीयमत्र । लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धनमसौ किल सिन्धुराजः ॥ १० ॥

## गुणप्रशंसा २३

सर्वत्र गुणवान्देशे चकास्ति प्रथितो नरः । मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते ॥१॥ गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः ॥ २ ॥ यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । नहि कस्तूरिकामोदः शपथेन निवार्यते ॥ ३ ॥ गुणवज्जनसंसर्गाद्याति स्वल्पोऽपि गौरवम् । पुष्पमालाप्रसङ्गेन सूत्रं शिरसि धार्यते ॥ ४ ॥ शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरम् । शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ५ ॥ गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ ६ ॥ गुणेषु क्रियतां यत्नः किमाटोपैः प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ ७ ॥ गुणैर्गौरवमायाति नोच्चैरासन-

मास्थितः । प्रासादशिखरस्थोऽपि काकः किं गरुडायते ॥ ८ ॥ गुणैः सर्वज्ञकल्पोऽपि सीदत्येको निराश्रयः । अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते ॥ ९ ॥ गुणेन स्पृहणीयः स्यान्न रूपेण युतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥ १० ॥ गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह । सगुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥ ११ ॥ न पुत्रत्वेन पूज्यन्ते गुणैरासाद्यते पदम् । रवेर्व्यापारमादत्ते प्रदीपो न पुनः शशी ॥ १२ ॥ गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः । वासुदेवं नमस्यन्ति वसुदेवं न मानवाः ॥ १३ ॥ गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित् । स्फाटिकं भाजनं भग्नं काकिण्याऽपि न गृह्यते ॥१४॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणो ... नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी । गुणी च गुणरागी च विरलः सरलो जनः ॥ १५ ॥ गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः । मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥ १६ ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः । देहिनां गुणदोषाः स्युर्मित्राणि रिपवस्तथा १७ संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति स्फुटम् । दग्धस्या

गुरुखण्डस्य स्फारीभवति सौरभम् ॥ १८ ॥ बुधाग्रे न गु-
णान् ब्रूयात्साधु वेत्ति यतः स्वयम् । मूर्खाग्रेऽपि च न ब्रूया-
द्बुधप्रोक्तं न वेत्ति सः ॥ १९ ॥ परैः प्रोक्ता गुणा यस्य
निर्गुणोऽपि गुणी भवेत् । इन्द्रोऽपि लघुतां याति स्वयं प्र-
ख्यापितैर्गुणैः ॥ २० ॥ तटस्थैः ख्यापिताश्चेतो विशन्ति गु-
णिनां गुणाः । उत्कोचितानां पद्मानां गन्धो वायुभिराहृतः
॥ २१ ॥ केतकीकुसुमं भृङ्गः खण्ड्यमानोऽपि सेवते ।
दोषाः किं नाम कुर्वन्ति गुणापहृतचेतसः ॥ २२ ॥
गुणयुक्तोऽप्यधो याति रिक्तः कूपे यथा घटः । निर्गुणोऽपि
भृतः पश्य जनैः शिरसि धार्यते ॥ २३ ॥ स्वयं स्वगुण-
विस्ताराद्रूर्णनाभः पतत्यधः । तदेव संहरन् भूयः पदमुच्चै-
र्विगाहते ॥ २४ ॥ अहो गुणानां प्राप्त्यर्थं यतन्ते बहुधा
नराः । मुक्ता यदर्थं भग्नास्या इतरेषां च का कथा ॥२५॥
गुणवन्तः क्लिश्यन्ते प्रायेण भवन्ति निर्गुणाः सुखिनः ।
बन्धनमायान्ति शुका यथेष्टसञ्चारिणः काकाः ॥ २६ ॥
गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
अलिरेति वनात्पद्मं न दर्दुरस्त्वेकवासोऽपि ॥ २७ ॥ अमित-

गुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति । निखिल-रसायनमहितो गन्धेनोग्रेण लशुन इव ॥ २८ ॥ गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः । सुस्वादुतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥ २९ ॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणो बली बलं वेत्ति न वेत्ति निर्बलः । मधोर्गुणं वेत्ति पिको न वायसः करी च सिंहस्य बलं न मूषकः ॥ ३० ॥

## वाङ्माधुर्यम् २४

यस्य वाण्यस्ति मधुरा तस्यैव सफलं तपः नो चेज्जी-वन्ति पशवोऽप्यनिशं पुष्टिशालिनः ॥ १ ॥ ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति सत्कृतम् । श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहाः ॥ २ ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहि-तञ्च यत् । स्वाध्यायाभ्यसनञ्चैव वाङ्मयन्तप उच्यते ॥ ३ ॥ नहीदृशं संवननं त्रिषु लोकेषु किञ्चन । दया मैत्री च भूतेषु दानञ्च मधुरा च वाक् ॥ ४ ॥ भार्या पुत्रोऽप्युद्विजेत कटुवाक्यात्मदण्डतः । पशवोऽपि वशं यान्ति दानैश्च मृदुभा-षणैः ॥ ५ ॥ प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।

तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥६॥ को हि भारः समर्थानां किं दूरं व्यवसायिनाम् । को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥ ७ ॥ प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु वा । शिखीव केकां मधुरां वाचं ब्रूते जनप्रियः ॥ ८ ॥ मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः । हरन्ति न तथा वाचो यथा वाचो विपश्चिताम् ॥ ९ ॥ अभ्यावहति कल्याणं विविधं वाक् सुभाषिता । सैव दुर्भाषिता राजन्नन-र्थायोपपद्यते ॥ १० ॥ वाक्संयमो हि नृपते सुदुष्करतमो मतः । अर्थवच्च विचित्रञ्च न शक्यं बहु भाषितुम् ॥११॥ तास्तु वाचः सभायोग्या याश्चित्ताकर्षणक्षमाः । स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥ १२ ॥ धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम् । इत्यादि गुणरत्नानां संग्रही नावसी-दति ॥१३॥ नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्मभिः । ययाऽस्योद्विजेत वाचा नालोक्यां तामुदीरयेत् ॥ १४ ॥ यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा । परापवादसस्येभ्यो गां चरन्तीं निवारय ॥ १५ ॥ लक्ष्मीर्वसति जिह्वाऽग्रे जि-ह्वाग्रे मित्रबान्धवाः । जिह्वाग्रे बन्धनं प्राप्तं जिह्वाग्रे मरणं

ध्रुवम् ॥ १६ ॥ वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव । अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता ॥ १७ ॥ हृदि विद्ध इवात्यर्थं यया सन्तप्यते जनः । पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥ १८ ॥ रोहते सायकैर्विद्धं वनं परशुना हतम् । वाचा दुरुक्तया विद्धं न संरोहति वाक्क्षतम् ॥ १९ ॥ कर्णिनालीकनाराचान्निर्हरन्ति शरीरतः । वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥२०॥ वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति राज्यहानि । परस्य नाममर्मसु ते पतन्ति तान्पण्डितो नावसृजेत्परेभ्यः ॥ २१ ॥ वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोऽपि नष्टः । किन्तद्द्रव्यं कोकिलेनोपनीतं को वा लोके गर्दभस्यापराधः ॥ २२ ॥ कामान्दुग्धे विप्रकर्षत्यलक्ष्मीं कीर्तिं सूते दुष्कृतं या हिनस्ति । ताञ्चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥ २३ ॥ खिन्नञ्चापि सुभाषितेन रमते स्वीयं मनः सर्वदा श्रुत्वाऽन्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति । अज्ञान् ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः

संग्रहः ॥ २४ ॥ तथ्यं पथ्यं सहेतुं प्रियमितमृदुलं सारवद्दैन्यहीनं साभिप्रायं दुरापं सविनयमशठं चित्रमल्पाक्षरञ्च । बह्वर्थं कोपशून्यं स्मितयुतघनदाक्षिण्यसन्देहहीनं वाक्यं ब्रूयाद्रसज्ञः परिषदि समये सप्रमेयाप्रमेयम् ॥ २८ ॥

## ऐक्यप्रशंसा २५

मा भ्राता भ्रातरं द्विषन्मा स्वसारमुत स्वसा । सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ १ ॥ सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् । देवा भागं यथा पूर्वे सञ्जनाना उपासते ॥ २ ॥ समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् । समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ॥ ३ ॥ संहतत्वाद्यथा वेणुर्निविडैः कण्टकैर्वृतः । न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा ॥ ४ ॥ वयं पञ्च वयं पञ्च वयं पञ्च शतं च ते । अन्यैः सह विवादे तु वयं पञ्च शतं च वै ॥५॥ अल्पानामपि वस्तूनां संहतिः कार्यसाधिका । तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥६॥ वहूनां चैव सत्वानां समवायो रिपुञ्जयः । वर्षधाराधरो मेघस्तृणैरपि निवार्यते ॥ ७ ॥ संहतिः श्रेयसी पुंसां

स्वकुलैरल्पकैरपि । तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ ८ ॥ अन्योन्यैक्यप्रभावेन पाण्डवानां जयः किल । विनष्टाः कौरवाः सर्वे तदभावान्न संशयः ॥९॥ पृथिव्यप्तेजसां सङ्गो दृष्टः कार्यस्य साधकः । भिन्नास्तदणवः सर्वे न शक्तास्तस्य सिद्धये ॥ १० ॥ एकस्मिन्पक्षिणि काके यदा विज्ञायते विपत् । ते काका मिलिताः सन्तो यतन्ते तन्निवृत्तये ॥ ११ ॥ वानराणां यथा दृष्टा ह्यन्योन्यस्य सहायता । मनुष्यैरपि कर्तव्या न विरोधः कदाचन ॥ १२ ॥ सर्वथा संहतैरेव दुर्बलैर्बलवानपि । अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥ १३ ॥ महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः । प्रसह्य एव वातेन शक्यो धर्षयितुं क्षणात् ॥ १४ ॥ एवं मनुष्यमप्येकं शौर्येणापि समन्वितम् । शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम् ॥१५॥ अथ ये संहता वृक्षाः संघशः सुप्रतिष्ठिताः । ते हि शीघ्रतमान्वातान् सहन्तेऽन्योन्यसंश्रयात् ॥ १६ ॥ पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह । पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह ॥१७॥ कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रताम् । ज्ञातिभिश्च समं मेलं

कुर्वाणो नावसीदति ॥ १८ ॥ अन्योन्यसमुपष्टम्भादन्योन्यार्थाश्रयेण च । ज्ञातयः संप्रवर्द्धन्ते सरसीवोत्पलान्युत ॥ १९ ॥ ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः । ते पापा इति विख्याताः संवासे परिगर्हिताः ॥ २० ॥ जायापत्योश्च पित्रोश्च भ्रात्रोश्च स्वामिभृत्ययोः । भगिन्योर्मित्रयोर्भेदं न कुर्याद्गुरुशिष्ययोः ॥ २१ ॥ यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् । स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्त्यमश्नुते ॥ २२ ॥ ज्ञातयो वर्द्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् । कुलवृद्धिञ्च राजेन्द्र तस्मात्साधु समाचर ॥ २३ ॥ श्रेयसा योक्ष्यसे राजन् कुर्वाणो ज्ञातिसत्क्रियाम् । विगुणा अपि संरक्ष्या ज्ञातयो भरतर्षभ ॥ २४ ॥ संभोजनं संकथनं संप्रीतिश्च परस्परम् । ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ २५ ॥ ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च । सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ २६ ॥ यत्रात्मीयो जनो नास्ति भेदस्तत्र न विद्यते । कुठारे दण्डनिर्मुक्ते भिद्यन्ते तरवः कथम् ॥२७॥ कुठारमालिकां दृष्ट्वा कम्पिताः सकला द्रुमाः । वृद्धस्तरुरुवाचेदं स्वजातिर्नैव दृश्यते ॥२८

॥ ज्ञातिभिर्विग्रहस्तात न कर्तव्यः शुभार्थिना । सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ॥२९॥न वै भिन्ना जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः । न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्नाः प्रशमं रोचयन्ति ॥ ३० ॥

## धनप्रशंसा २६

ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मागृधः कस्यस्विद्धनम् ॥

धनवान्बलवाँल्लोके सर्वः सर्वत्र सर्वदा । प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ १ ॥ नहि तद्विद्यते किञ्चिद्यदर्थेन न सिध्यति । यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥२॥ वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धानां द्वारि तिष्ठन्ति किङ्कराः ॥ ३ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ४ ॥ संसृतौ व्यवहाराय सारभूतं धनं स्मृतम् । अतो यतेत तत्प्राप्त्यै नरो ह्युपायसाहसैः ॥ ५ ॥ पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते । वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥ ६ ॥ अशनादिन्द्रियाणीव

स्युः कार्याण्यखिलान्यपि । एतस्मात्कारणाद्वित्तं सर्वसाधन-
मुच्यते ॥ ७ ॥ ब्रह्मघ्नोऽपि नरः पूज्यो यस्यास्ति विपुलं
धनम् । शशिना तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ८ ॥
धनं सञ्चय काकुत्स्थ धनमूलमिदं जगत् । अन्तरं नैव
पश्यामि निर्धनस्य मृतस्य च ॥ ९ ॥ न नरस्य नरो दासो
दासश्चार्थस्य भूपते । गौरवं लाघवं वाऽपि धनाधननिबन्धनम्
॥ १० ॥ अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
अतोऽर्थाय यतेतैव सर्वदा यत्नमास्थितः ॥ ११ ॥ स्वामि-
त्वञ्चैव दातृत्वं धनिकत्वं तपःफलम् । एनसः फलमर्थित्वं
दास्यत्वञ्च दरिद्रता ॥ १२ ॥ धनमाहुः परं धर्मं धने सर्वं
प्रतिष्ठितम् । जीवन्ति धनिनो लोके मृता ये त्वधना नराः
॥ १३ ॥ इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥ १४ ॥ अस्ति
यावत्तु सधनस्तावत्सर्वैस्तु सेव्यते । निर्धनस्त्यज्यते भार्या-
पुत्राद्यैः सगुणोऽप्यतः ॥ १५ ॥ धर्माय यशसेऽर्थाय आत्मने
स्वजनाय च । पञ्चधा विभजन्वित्तमिहामुत्र च मोदते ॥
१६ ॥ धनी भोगान्समाप्नोति धनी स्वर्गञ्च गच्छति ।

विपुलाञ्च तथा कीर्तिं गुणान्नानाविधानपि ॥१७॥ अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ १८ ॥ अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः । क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ १९ ॥ अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप । प्राण-यात्राऽपि लोकस्य विना ह्यर्थं न सिध्यति ॥ २० ॥ अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः । विछिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ २१ ॥ यः कृशार्थः कृशगवः कृश-भृत्यः कृशातिथिः । स वै राजन्कृशो नाम न शरीरकृशः कृशः ॥२२॥ अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता । सर्वथा धनमाहार्यं यष्टव्यञ्चापि यत्नतः ॥ २३ ॥ धनादि-विरहेणैव न स्वर्गो लभ्यते क्वचित् । नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः ॥ २४ ॥ अधनं दुर्बलं प्राहुर्धनेन बलवा-न्भवेत् । सर्वं धनवता प्राप्यं सर्वं तरति कोशवान् ॥ २५ ॥ सुनिर्धनत्वं प्राप्यैके मरणं भेजिरे जनाः । ग्रामायैकेऽचलायैके नाशायैके प्रवव्रजुः ॥ २६ ॥ उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् । दास्यमेके च गच्छन्ति परेषामर्थहेतुना॥२७

॥लज्जन्ते बान्धवास्तेन संबन्धं गोपयन्ति च । मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥२८॥ दरिद्रं दुःखसंपन्नं पापिनं प्रवदन्त्यतः । श्रीमन्तं सुखसंपन्नं पुण्यात्मानञ्च लौकिकाः ॥ २९ ॥ निर्धनं सर्व एवैते श्वसन्तं पुरतः स्थितम् । अवजानन्ति मित्राद्या मानवा धनगर्विताः ॥ ३० ॥ कुलं शीलं तथा विद्या गुणा नानाविधा अपि । निर्धनस्य न कार्याय क्षमन्ते शत्रवत्स्थिताः ॥ ३१ ॥ दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् । अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ३२ ॥ हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य । अप्यतिपरुषमसत्यं पूज्यं वाक्यं समृद्धस्य ॥ ३३ ॥ शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म । न विराजन्ति हि सर्वे वित्तहीनस्य पुरुषस्य ॥ ३४ ॥ नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य । घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ३५ ॥ दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनन्धनन्धनम् । इत्थमेव निनदः प्रवर्तते किं पुनर्यदि जनः सचेतनः ॥ ३६ ॥ अहो नु कष्टं सततं प्रवासस्ततोऽतिकष्टः परगेहवासः । कष्टाधिका नीचजनस्य सेवा ततो-

ऽतिकष्टा धनहीनता च ॥ ३७ ॥ शूरः सुरूपः सुभगश्च वाग्मी सर्वाणि शास्त्राणि विदाङ्करोतु । अर्थं विना नैव यशश्च मानं प्राप्नोति मर्त्योऽत्र मनुष्यलोके ॥ ३८ ॥ त्यजेत्क्षुधार्तो महिलां सपुत्रां खादेत्क्षुधार्ता भुजगी स्वमण्डम् । बुभुक्षितः किन्न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥ ३९ ॥ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः । स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ४० ॥ त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च । तमर्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ ४१ ॥ बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते । न छन्दसा कापि समुद्धृतं कुलं हिरण्यमेवाश्रय निष्फला गुणाः ॥ ४२ ॥ धनैर्निष्कुलीनाः कुलीना भवन्ति धनैरापदं मानवा निस्तरन्ति । धनेभ्यः परो बान्धवो नास्ति लोके धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥४३॥ वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयः पत्रफलाम्बुभोजनम् । तृणानि शय्या वसनञ्च वल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ ४४ ॥ यदा तु भाग्यक्षयपीडितां

दशां नरः कृतान्तोपहितां प्रपद्यते । तदाऽस्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ॥ ४५ ॥ वाणी दरिद्रस्य शुभा हिताऽपि ह्यर्थेन शब्देन च संप्रयुक्ता। न शोभते वित्तवतः समीपे भेरीनिनादोपहतेव वीणा॥४६॥ तानीन्द्रियाण्यविकलानि मनस्तदेव सा बुद्धिरप्रतिहता वचनं तदेव । अर्थोष्मणा विरहितः पुरुषः स एव ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥४७॥ माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते । भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते । अर्थप्रार्थनशङ्कया न कुरुते संभाषणं वै सुहृत् तस्माद्द्रव्यमुपार्जय शृणु सखे द्रव्येण सर्वे वशाः ॥४८॥ पद्मे मूढजने ददासि द्रविणं विद्वत्सु किं मत्सरो नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः । मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥ ४९ ॥ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां मूकत्वं मितभाषितां वितनुते मौढ्यं भवेदार्जवम् । पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां मातर्लक्ष्मि तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ ५० ॥

# धनदोषाः २७

याज्ञवल्क्यो हि संन्यासं करिष्यन्निदमुक्तवान्। मैत्रेयीति च संबोध्य मैत्रेयीं मुनिसत्तमः ॥ १ ॥ अरे जाये प्रिये न्यासं चतुर्थं योग्यमाश्रमम् । करिष्याम्यहमद्यैव गृहस्थत्वं विहाय हि ॥ २ ॥ हन्त जाये ततः कुर्वे वित्तभागं तवाधुना । कात्यायन्याऽनया सार्द्धं पश्चात्सुखकरं द्वयोः ॥ ३ ॥ एवमुक्ताऽतिसंखिन्ना संसारभरमन्थरा । अप्राप्तावसरा पूर्वं सा होवाच पतिम्प्रति ॥ ४ ॥ भगवन्वित्तमिच्छामि मरणेन विवर्जितम् । त्वया दत्तं न चान्यत्तु लोके यन्मरणप्रदम् ॥ ५ ॥ पृथिवी सकला चेत्स्यात्पूर्णा वित्तेन मे मुने । त्वया दत्ताऽत्र तेनाहममृता स्यां न वा वद ॥ ६ ॥ इत्युक्ते याज्ञवल्क्यस्तां नेत्याह मुनिसत्तमः । अमृतत्वस्य मोक्षस्य वित्तेनाशा न चास्ति हि ॥ ७ ॥ वित्तवान् स्वजनात्तद्वच्चोरेभ्योऽपि च दुर्जनात् । राजादिभ्योऽपि सततं मृत्युमाप्नोति दुःखतः ॥ ८ ॥ वित्तवान्को हि लोकेऽस्मिन्निश्चिन्तः कुत्रचिद्वसेत् । अपि स्वप्नेऽपि तस्यास्ति भयं राजादिजं महत् ॥ ९ ॥ निर्धनानां सदा दैवमनुकूलं हि जायते । धनिनां

प्रतिकूलं तत्प्रायशो दृश्यते भुवि ॥ १० ॥ यतोऽत्र धनिनो लोके रोगिणः क्षुद्विवर्जिताः । अल्पायुषो ह्यतृप्ताश्च धनराशौ महत्यपि ॥ ११ ॥ विरोधिनश्च सततमन्तः पुत्रादिभिर्जनैः । केचिद्बहिश्च दृश्यन्ते श्वभिः श्वानो यथा भुवि ॥१२॥ चित्ते व्याकुलता तेषां कर्तव्यासक्तचेतसाम् । वर्तते नैव गच्छन्ति यथा ते सुखमण्वपि ॥ १३ ॥ धनमत्ताः प्रकुर्वन्ति पापानि विविधानि हि । दरिद्राः सर्वतो भीता नैव कुर्वन्ति किञ्चन ॥ १४ ॥ अवजानन्ति धनिनो देवान् राज्ञो गुरूनपि । अतिथीन् ब्राह्मणांस्तद्वद्वेदवेदाङ्गपारगान् ॥ १५ ॥ दुःखान्यपि बहुन्येते गच्छन्त्यविरतं जनाः । स्वपक्षे परपक्षे च भूतोपद्रवकारकाः ॥ १६ ॥ इत्यादिकं धनी दुःखं प्राप्नुयान्निर्धनो न तत् । शक्त्यभावेन मैत्रेयि धनिनो निर्धनो वरः ॥ १७ ॥ धनिनां जीवितं यादृक् तादृगेव तवापि च । धनलाभाद्धि मैत्रेयि भविष्यति न संशयः ॥ १८ ॥ वित्तासक्तेषु पतिषु चलचित्तेषु सर्वदा । अमृतत्वस्य नैवाशा यथा तेऽपि तथैव सा ॥ १९ ॥ द्रव्येण जायते कामः क्रोधो द्रव्येण जायते । द्रव्येण जायते लोभो मोहो द्रव्येण जायते ॥ २० ॥ अन्नं

यावत्प्रियाऽऽदद्यादाज्ञि तावदहं स्वयम् । दरिद्र इति सञ्चिन्त्य स्त्रीमुखं न विलोकयेत् ॥ २१ ॥ दरिद्रं पुरुषं दृष्ट्वा नार्यः कामातुरा अपि । स्प्रष्टुं नेच्छन्ति कुणपं यद्वत्कृमिविदूषितम् ॥ २२ ॥ दरिद्रः कास्मुचित्कामं न कुर्याज्जननीष्विव । अन्नमेकं विहायायं किञ्चिन्नेच्छति कर्हिचित् ॥ २३ ॥ विवेकीव दरिद्रोऽयं कोपं न कुरुते क्वचित् । राजादिभयतो नित्यं यमराजभयात्तथा ॥ २४ ॥ पुरा कृतानां पापानां फलमेतत्समाप्तवान् । दारिद्र्यन्नाम किन्नाम भूयस्तस्मात्परं भवेत् ॥ २५ ॥ परदारान्परद्रव्यं भीतस्तस्मान्न चेच्छति । क्षुधया पीडितश्चायं तुष्यत्यल्पेन सर्वदा ॥ २६ ॥ दरिद्रस्य न लोभोऽस्ति न मोहश्च महात्मनः । इत्थमेव सुविचार्य सुखं तिष्ठति निश्चलः ॥ २७ ॥ मह्यं कोऽपि कदाचिद्वा याचमानाय नित्यशः । न दद्यादन्नमात्रञ्च किमर्थं काङ्क्षयाम्यहम् ॥ २८ ॥ आकिञ्चन्ये च राज्ये च विशेषः सुमहानयम् । नित्योद्विग्नो हि धनवान् मृत्योरास्यगतो यथा ॥ २९ ॥ नैवास्याग्निर्न चारिष्टो न मृत्युर्न च दस्यवः । प्रभवन्ति धनत्यागाद्विमुक्तस्य निराशिषः ॥ ३० ॥ तं वै सदा कामचर-

मनुपस्तीर्णशायिनम् । बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥३१॥ धनवान्कामलोभाभ्यामाविष्टो नष्टचेतनः । तिर्यगीक्षः शुष्कमुखः पापको भ्रुकुटीमुखः ॥ ३२ ॥ निर्दशन्नधरोष्ठञ्च क्रुद्धो दारुणभाषिता । कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छेत चेन्महीम् ॥३३॥ भक्तद्वेषो जडे प्रीतिररुचिर्गुरुलङ्घनम् । मुखे च कटुता नूनं धनिनां ज्वरिणामिव ॥३४॥ लोभाविष्टो नरो वित्तमीक्षते न स चापदम् । दुग्धं पश्यति मार्जारो यथा न लगुडादिकम् ॥३५॥ मायां विना महाद्रव्यं द्राङ्न संपाद्यते जनैः । विना परस्वहरणान्न कश्चित्स्यान्महाधनः ॥३६॥ आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे पथि । अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥३७॥ कामिनः कामिनीनां वा कामिनीपृष्ठगामिनाम् । नटानाञ्चापि दद्युस्ते सहस्राणि शतानि च ॥३८॥ ब्रह्मवादरतेभ्यस्ते नापि पञ्च वराटकान् । दद्युस्तस्मै वदद्भ्यो वा परेभ्यस्तु कथं पुनः ॥ ३९ ॥ समर्थः श्रीमदान्धोऽयं राजानं देवतां गुरुम् । अवजानाति सहसा स्वात्मनो बलमाश्रितः ॥ ४० ॥ असह्यं दुःखमाप्नोति लोकद्वयभयङ्करम् । कीर्तिहानिञ्च धिग्वादं

सद्यो गच्छति मोहितः ॥ ४१ ॥ लोभश्चास्मिन्समर्थे स्यात् सदृशो जातवेदसा। यावद्यावदवाप्नोति ततो भूयः स इच्छति ॥ ४२ ॥ पृथिवीं धनपूर्णां चेदिमां सागरमेखलाम् । प्राप्नोति पुनरप्येष स्वर्गमिच्छति निरशः ॥ ४३ ॥ समर्थः स्वात्मलोभेन परदारधनादिकम् । हृत्वा चोपहसन्यान्सर्व-शोच्यो नराधमः ॥ ४४ ॥ समर्थो मोहमापन्नो न जानाति हिताहितम् । स्वात्मानं द्वेष्टि चैवार्यं स्वात्मनो हितकारिणम् ॥ ४५ ॥ मातरं पितरं पुत्रान्ब्राह्मणांश्च बहुश्रुतान् । कर्मणा मनसा वाचा समर्थो हन्ति मोहतः ॥ ४६ ॥ यदर्ज्यते परि-क्लेशैरर्जितं यन्न भुज्यते। विभज्यते यदन्तेऽन्यैः कस्यचिन्मा-स्तु तद्धनम् ॥ ४७ ॥ मृत्युः शरीरगोप्तारं वसुरक्षं वसुन्धरा । दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥४८॥ अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते । जनितारमपि सत्त्वा निःस्वं गच्छति दूरतः ॥ ४९ ॥ वरं हालाहलं पीतं सद्यः प्राणहरं विषम् । न द्रष्टव्यं धनाढ्यस्य भ्रूभङ्गकुटिलं मुखम् ॥ ५० ॥ राजतः सलिलादग्नेश्चोरतः स्वजनादपि । भयमर्थ-वतां नित्यं मृत्योः प्राणभृतामिव ॥ ५१ ॥ अर्थस्योपार्जने

दुःखमर्जितस्यापि रक्षणे । नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥ ५२ ॥ अविश्वासनिधानाय महापातकहेतवे । पितृपुत्रविरोधाय हिरण्याय नमोऽस्तु ते ॥५३॥ हिरण्य-रत्नसञ्चयाः शुभाशुभेन सञ्चिताः । न तस्य देहसंक्षये भवन्ति कार्यसाधकाः ॥ ५४ ॥ धनस्य यस्य राजतो भयं न चास्ति चोरतः । मृतञ्च यन्न मुञ्चति त्वमर्जयस्व तद्धनम् ॥५५॥ बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति । विकृतयति गात्रयष्टिं सम्पद्रोगोऽयमद्भुतो राजन् ॥ ५६ ॥ अर्जुनीयति यदर्जने जनो वर्जनीयजनतर्जनादिभिः । आशु नश्यति चिराय सञ्चिता वञ्चिता जगति के न सम्पदा ५७ वरमसिधारा तरुतलवासो वरमिह भिक्षा वरमुपवासः । वर-मपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥ ५८ ॥ आपद्गतं हससि किं द्रविणान्ध मूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् । एतान्प्रपश्यसि घटान् जलयन्त्र-चक्रे रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ५९ केचिद्धनं निदधते भुवि नोपभोगं कुर्वन्ति लोभवशगा न विदन्ति केचित् । अन्येन गोपितमथान्यजना हरन्ति तच्चेन्नदीपरिसरे

जलमेव हन्तृ ॥ ६० ॥

## गृहस्थाश्रमगुणदोषौ २८

वयांसि पशवश्चैव भूतानि च जनाधिप । गृहस्थैरेव धार्यन्ते तस्माज्ज्येष्ठो गृहाश्रमी ॥ १ ॥ न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥२॥ यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ३ ॥ यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः । तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः ॥ ४ ॥ यस्मात्त्रयोऽप्याश्रमिणो दानेनान्नेन चान्वहम् । गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥ ५ ॥ स संधार्यः प्रयत्नेन स्वर्गमक्षयमिच्छता । सुखञ्चेहेच्छता नित्यं योऽधार्यो दुर्बलेन्द्रियैः ॥ ६ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥ ७ ॥ सर्वेषामपि चैतेषां वेदस्मृतिविधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि ॥ ८ ॥ अस्ति पुत्रो वशे यस्य भृत्यो भार्या तथैव च । अभावे सति संतोषः स्वर्गस्थोऽसौ महीतले ॥ ९ ॥ अतिथिर्बालकः पत्नी जननी

जनकस्तथा । पञ्चैते गृहिणा पोष्या इतरे च स्वशक्तितः ॥ १० ॥ मातरं पितरं पुत्रं दारानतिथिसोदरान् । हित्वा गृही न भुञ्जीयादेकाकी तु कदाचन ॥ ११ ॥ विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः । विघसं भुक्तशेषन्तु यज्ञशेषमथामृतम् ॥ १२ ॥ गृहस्थं हि सदा देवाः पितरोऽतिथयस्तथा । भृत्याश्चैवोपजीवन्ति तान्भरस्व महीपते ॥ १३ ॥ अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति । नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ॥ १४ ॥ पात्रन्त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत् । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ १५ ॥ देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीव्यते । गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमो गृही ॥ १६ ॥ तप्त्वा तपस्वी विपिने क्षुधार्तो गृहं समायाति सदाऽन्नदातुः । भुक्त्वा स चान्नं प्रददाति तस्मै तपो विभागं भजते हि तस्य ॥ १७ ॥ यदि रामा यदि च रमा यदि तनयो विनयधीगुणोपेतः । तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम् ॥ १८ ॥ सुविप्रपादोदककर्दमानि सुवेदशास्त्रध्वनिगर्जितानि । स्वाहास्वधाकारनिरन्तराणि स्वानन्दतुल्यानि गृहाणि तानि ॥१९

क्षणभङ्गि यौवनं कृतान्तदन्तान्तर्वर्ति जीवितम् । तथाऽप्यवज्ञा परलोकसाधने नृणामहो विस्मयकारि चेष्टितम् ॥३९॥ प्राप्ता जरा यौवनमप्यतीतं बुधा यतध्वं परमार्थसिद्ध्यै । आयुर्गतप्रायमिदं यतोऽसौ विश्राम्य विश्राम्य न याति कालः ॥ ४० ॥ भगीरथाद्याः सगरः ककुत्स्थो दशाननो राघवलक्ष्मणौ च । युधिष्ठिराद्याश्च बभूवुरेते सत्यं क्व याता बत ते नरेन्द्राः ॥ ४१ ॥ मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम् । मायामयमिदमखिलं हित्वा ब्रह्मपदं प्रविशाशु विदित्वा ॥ ४२ ॥ आराध्य भूपतिमवाप्य ततो धनानि भुञ्जामहे वयमिह प्रसभं सुखानि । इत्याशया बत विमोहितमानसानां कालो जगाम मरणावधिरेव पुंसाम् ॥ ४३ ॥ संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य । वर्षाम्बुसिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ ४४ ॥ प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम् । संप्रीणिताः प्रणयिनो विभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥४५॥ यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको यत्राप्येकस्तदनुबह-

वस्तत्र नैकोऽपि चान्ते। इत्थञ्चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ कालः काल्या भुवनफलके क्रीडति प्राणिशारैः॥ ४६ ॥ भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रञ्च तत् पार्श्वे तस्य च साऽपि राजपरिषत्ताश्चन्द्रबिम्बाननाः। उद्रिक्तः स च राजपुत्रनिवहस्ते वन्दिनस्ताः कथाः सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः॥ ४७ ॥ व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि। दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि॥ ४८ ॥ मान्धाता स महीपतिः क्षितितलेऽलङ्कारभूतो गतः सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः। अन्ये चापि युधिष्ठिरप्रभृतयो यावन्त एवाभवन् नैकेनापि समं गता वसुमती मुञ्ज त्वया यास्यति॥ ॥ ४९ ॥ रामे प्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम्। नाट्याचार्य्यकमर्जुनस्य पतनं संचिन्त्य लङ्केश्वरे सर्वः कालवशेन नश्यति नरः को वा परित्रायते॥ ५० ॥

## राजयोगः ४०

यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ १ ॥ अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥२॥ अश्वमेधसहस्राणि राजसूयशतानि च । ध्यानयोगस्य सर्वाणि कलां नार्हन्ति षोडशीम् ॥ ३ ॥ बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् । गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति ॥ ४ ॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥५॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ६ ॥ इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ७ ॥ आत्मज्ञानेन मुक्तिः स्यात्तच्च योगादृते नहि । स च योगश्चिरं कालमभ्यासादेव सिध्यति ॥८॥ गृहस्थानां सहस्रेण वानप्रस्थशतेन च । ब्रह्मचारिसहस्रेण योगाभ्यासी विशिष्यते ॥९॥ कृतार्थौ पितरौ तेन धन्यो देशः कुलञ्च तत् । जायते योगवान्यत्र दत्तम-

क्षय्यतां व्रजेत् ॥ १० ॥ जैगीषव्यो यथा विप्रो यथा चैवासितादयः । क्षत्रिया जनकादयस्तु तुलाधारदयो विशः ॥ ११ ॥ संप्राप्ताः परमां सिद्धिं पूर्वाभ्यस्तस्वयोगतः । धर्मव्याधादयश्चैव शूद्राः पैलवकादयः ॥ १२ ॥ मैत्रेयी सुलभा शार्ङ्गी शाण्डिली च तपस्विनी । एते चान्ये च बहवो नीचयोनिगता अपि । ज्ञाननिष्ठां परां प्राप्ताः पूर्वाभ्यस्तस्वयोगतः ॥ १३ ॥ तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः । कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ १४ ॥ इहामुत्र विरक्तस्य संसारं प्रजिहासतः । जिज्ञासोरेव कस्यापि योगेऽस्मिन्नधिकारिता ॥१५॥ यमश्च नियमश्चैव तृतीयमासनं मतम् । प्राणायामस्तथा गार्गि प्रत्याहारश्च धारणा । ध्यानं समाधिरेतानि योगाङ्गानि निबोध मे ॥१६॥ ब्रह्मचर्यमहिंसा च सत्यास्तेयापरिग्रहान् । सेवेत योगी निष्कामो योग्यतां मनसो नयन् ॥ १७ ॥ कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहा । अस्तेयमिति संप्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ १८ ॥ परमापद्गतेनापि न कार्यःस्तेयअल्पकः । स्तेयादप्यधिकः कश्चिन्नास्त्यधर्मइतिस्मृतः ॥ १९ ॥

स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान् । कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ॥ २० ॥ द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २१ ॥ शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथान्तरम् ॥२२॥ सर्वेषामेव शौचानामन्तः शौचं परं स्मृतम् । योऽन्तःशुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ॥२३॥ मृत्तिकानां सहस्रैस्तु जलकुम्भशतैरपि । न शुद्ध्यन्ति दुरात्मानो येषां भावो न निर्मलः ॥ २४ ॥ न शरीरमलत्यागान्नरो भवति निर्मलः । मानसे तु मले त्यक्ते भवत्यन्तः सुनिर्मलः ॥ २५ ॥ नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते । स स्नातो यो दमस्नातः स बाह्याभ्यन्तरः शुचिः ॥ २६ ॥ मनसश्चेन्द्रियाणाञ्च निग्रहः परमन्तपः । स ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ २७ ॥ मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः । आत्मविद्योपघातस्तु न तपस्तत्सतां मतम् ॥ २८ ॥ एकान्ते विजने देशे पवित्रे निरुपद्रवे । कम्बलाजिनवस्त्राणामुपर्यासनमभ्यसेत् ॥ २९ ॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमा-

त्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ३० ॥ वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः । एवं वायुर्गृहीतव्यः पूरकस्येति लक्षणम् ॥ ३१ ॥ उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् । शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ ३२ ॥ नोच्छ्वसेन्न च निःश्वसेन्नैव गात्राणि चालयेत् । एवं तावन्नियुञ्जीत कुम्भकस्येति लक्षणम् ॥ ३३ ॥ शब्दादिभ्यः प्रवृत्तानि यदक्षाणि यतात्मभिः । प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥ ३४ ॥ इन्द्रियाणां विचरतां विषयेषु स्वभावतः । बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥ ३५ ॥ देशबन्धस्तु चित्तस्य धारणेति प्रकीर्तिता । ध्यानशब्देन सा ज्ञेया या प्रत्ययैकतानता ॥ ३६ ॥ सलिले सैन्धवं यद्वत्साम्यं भजति योगतः । तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ ३७ ॥ राजत्वात्सर्वयोगानां राजयोग इति स्मृतः । राजन्तं दीप्यमानं तं परमात्मानमव्ययम् । प्रापयेद्देहिनां यस्तु राजयोगः स कीर्तितः ॥ ३८ ॥ धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः । वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥ ३९ ॥ नात्यश्नतस्तु

योगोऽस्ति न चैकान्तमनश्नतः । न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ ४० ॥ युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ ४१ ॥ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ॥ ४२ ॥ धनुर्गृहीत्वौपनिषदं महाऽस्त्रं शरं ह्युपासानिशितं सन्धीयत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥४३॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४४ ॥ अस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतैष सेतुः ॥ ४५ ॥ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ४६ ॥ युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् । प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ ४७ ॥ स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत् ॥ ४८ ॥ समाधि-

निर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तः करणेन गृह्यते ॥ ४९ ॥ यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ५० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपण्डित श्रीस्वामी-अच्युतानन्दसरस्वतीति नामधेयैः संगृहीतायां व्याख्यानमालायां पूर्वार्धे समाप्तम् ॥

# उत्तरार्धे विवेकप्रशंसा ४१

ओ३म् ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १ ॥ यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ २ ॥ यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ३ ॥ प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥ मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यज । क्षमाऽऽर्ज-

वदयाशौचं सत्यं पीयूषवत्पिब ॥ ५ ॥ यस्मान्मोक्षसुखाद-न्यत्सुखं क्वापि न विद्यते । तस्मान्मुमुक्षुणा भाव्यं नैव भो-गेच्छुना क्वचित् ॥ ६ ॥ कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतै-रपि । अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ॥ ७ ॥ ए-काकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः । एकाकी चिन्त-यानो हि परं श्रेयोऽधिगच्छति ॥ ८ ॥ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः । सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदाः ॥ ९ ॥ यो हि न कुरुते पापं सर्वभूतेषु कर्हिचित् । कर्मणा मनसा वाचा स ज्ञानी कथ्यते बुधैः ॥ १० ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । द्वावपि सुखमेधेते क्लि-श्यत्यन्तरितो जनः ॥ ११ ॥ उत्थायोत्थाय बोद्धव्यं महद्भ-यमुपस्थितम् । मरणव्याधिदुःखानां किमद्य निपतिष्यति ॥ १२ ॥ न तं पश्यामि लोकेऽस्मिन्यो न जातो मरिष्यति । इति संप्रत्ययं बुद्ध्वा स्वस्थैस्तु कथमास्यते ॥ १३ ॥ न व्या-धयो नच यमः श्रेयः प्राप्तुं प्रतीक्षते । यावदेव भवेत्काल-स्तावच्छ्रेयः समाचरेत् ॥ १४ ॥ यावन्न ग्रस्यसे रोगैर्यावन्नोपैति ते जरा । यावन्न क्षीयते चायुस्तावच्छ्रेयः समाचर ॥ १५ ॥

न च ते पुत्रदारेषु कर्तव्या मतिरीदृशी । कथन्तु कृपणा ह्येते वर्तिष्यन्ते मया विना ॥ १६ ॥ यद्गर्भे पालयत्येनं यच्च संवर्धयत्यपि । तदेवास्य स्वकं कर्म सुखदुःखोपपादने ॥१७॥ स्वकृतैर्जायते जन्तुः स्वकृतैरेव वर्धते । सुखदुःखे तथा मृत्युं स्वकृतैरेव विन्दति ॥१८॥ क्वासं क्व च गमिष्यामि कश्चाहं किमिहागतः । को बन्धुर्मम कस्याहमित्यात्मानं विचिन्तय ॥ १९ ॥ पुरासीत् स्वजनस्तेऽन्यः साम्प्रतं वर्तते परः । देहान्ते भविता चान्यस्तस्मात्त्वं परतः परः ॥ २० ॥ विवेक एव व्यसनं पुंसां क्षपयितुं क्षमः । अपहर्तुं समर्थोऽसौ रविरेव निशातमः ॥ २१ ॥ नानृतात्पातकं किञ्चिन्न सत्यात्सुकृतं परम् । विवेकान्न परो बन्धुरिति वेदविदो विदुः ॥ २२ ॥ आत्मानं विन्दते येन सर्वभूतगुहाशयम् । श्लोकेन यदि वाऽर्धेन क्षीणं तस्य प्रयोजनम् ॥ २३ ॥ प्राप्य चाप्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् । न वेत्त्यात्महितं यस्तु स भवेदात्मघातकः ॥ २४ ॥ मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः । शमो विचारः सन्तोषश्चतुर्थः साधुसङ्गमः ॥ २५ संतोषः साधुसङ्गश्च विचारोऽथ शमस्तथा । एत एव भवा-

म्भोधावुपायस्तरणे नृणाम् ॥ २६ ॥ सन्तोषः परमो लाभः सत्सङ्गः परमा गतिः । विचारः परमं ज्ञानं शमो हि परमं सुखम् ॥ २७ ॥ आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥२८॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्ते-त्याहुर्मनीषिणः ॥ २९ ॥ यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ३० ॥ यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ३१ ॥ यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसार-ञ्चाधिगच्छति ॥ ३२ ॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ३३ ॥ विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम् ॥ ३४ ॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । समं पश्यन्नात्मयाजी स्वा-राज्यमधिगच्छति ॥ ३५ ॥ त्यज दुर्जनसंसर्गं भज साधु-समागमम् । कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥ ३६

॥ यस्मातः संस्कृतश्चान्नं सायं सद्यो विनश्यति । तदीयरस- निष्पन्ने काये का नाम नित्यता ॥३७॥ सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः । शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ३८ ॥ जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः । निमित्तं किञ्चिदासाद्य देही प्राणान्विमुञ्चति ॥ ३९ ॥ एता याः प्रेक्षसे लक्ष्मीश्छत्रचामरचञ्चलाः । स्वप्न एष महा- बुद्धे दिनानि त्रीणि पञ्च वा ॥ ४० ॥ एकोऽद्य प्रातरपरे पश्चादन्ये पुनः परे । सर्वे निःसीम्नि संसारे यान्ति कः केन शोच्यते ॥ ४१ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ४२ ॥ पञ्चभिर्निर्मिते देहे पञ्चत्वञ्च पुर्नगते । स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥ ४३ ॥ एकसार्थप्रवृत्तानां सर्वेषां तत्र गामिनाम् । यद्येकस्त्वरितो याति तत्र का परिदेवना ॥ ४४॥ अकाण्डपातजातानामस्त्राणां मर्मभेदिनाम् । गाढशोक- प्रहाराणामचिन्तैव महौषधम् ॥ ४५ ॥ अज्ञानं कारणं न स्या- द्वियोगो यदि कारणम् । शोको दिनेषु गच्छत्सु वर्द्धतामपयाति किम् ॥ ४६ ॥ दुःखी दुःखाधिकान्पश्येत्सुखी पश्येत्सुखा-

धिकान् । आत्मानं हर्षशोकाभ्यां शत्रुभ्यामिव नार्पयेत् ॥ ४७ ॥ व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् । क्रन्दनं वर्धयसेत्र तस्यान्तं नाधिगच्छति ॥४८॥ केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः । तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ ४९ ॥ शोककाले शुचो मा त्वं हर्षकाले च माहृषः । अतीतानागतं हित्वा प्रत्युत्पन्नेन वर्तय ॥ ५० ॥ पुनर्वित्तं पुनर्मित्रं पुनर्भार्या पुनर्मही । एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः ॥ ५१ ॥ अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथायान्ति दैन्यमत्राति रिच्यते ॥५२॥ गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ ५३ ॥ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । सुखदुःखे मनुष्याणां चक्रवत्परिवर्ततः ॥ ५४ ॥ नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः । पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥ ५५ ॥ यदापि शोचतः शोको व्यसनं नापकर्षति । सामर्थ्यं शोचतो नास्तीत्यतोऽहं नाद्य शोचिमि ॥ ५६ ॥ शोको नाशयते धैर्यं शोको नाशयते श्रुतम् । शोको नाशयते सर्वं नास्ति शोक-

समो रिपुः ॥ ५७ ॥ प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः । एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ ५८ ॥ भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् । कृत्यं न कुरुते वेगान्न स सन्तापमाप्नुयात् ॥ ५९ ॥ यत्कुमाराः कुमार्य्यश्च वैरं कुर्युरचेतसः । न तत्प्राज्ञोऽनुकुर्वीत न विदुस्ते बलाबलम् ॥६०॥ शत्रुर्दहति संयोगे वियोगे मित्रमप्यहो । उभयोर्दुःखदायित्वं को भेदः शत्रुमित्रयोः ॥ ६१ ॥ सांसारिकसुखासक्तं ब्रह्माहमिति वादिनम् । कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ ६२ ॥ यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥ ६३ ॥ स्थानाद्बीजादुपष्टम्भान्निष्पन्दान्निधनादपि । कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥ ६४ ॥ अमेध्यपूर्णं कृमिजालसङ्कुलं स्वभावदुर्गन्धमशौमध्रुवम् । कलेवरं मूत्रपुरीषभाजनं रमन्ति मूढा न रमन्ति पण्डिताः ॥६५॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ ६६ ॥ श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः । अकिञ्चना हि मु-

नयः श्रद्धावन्तो दिवं गताः ॥ ६७ ॥ श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ६८ ॥ अश्रद्धा परमं पापं श्रद्धा पापप्रमोचिनी । जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥ ६९ ॥ निर्विवेकतया बाल्यं कामोन्मादेन यौवनम् । वृद्धत्वं विकलत्वेन सदा सोपद्रवं नृणाम् ॥७०॥ प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । तृप्ताः कामेन बाध्यन्ते प्राणिनो निशि निद्रया ॥ ७१ ॥ गतसारेऽत्र संसारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवांगुष्ठे बालानां स्तनविभ्रमः ॥ ७२ ॥ यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ७३ ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जाऽस्थिसंहतौ । विण्मूत्रपूये रमतां क्रमीणां कियदन्तरम् ॥७४॥ अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् । लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥ ७५ ॥ जातस्य हि ग्रहरोगादिः कुमारस्य च मूर्खता । उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥ ७६ ॥ यूनश्च परदारादिर्दारिद्र्यञ्च कुटुम्बिनः । पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥७७॥ नौषधानि

न मन्त्राश्च न होमा न पुनर्जपाः । त्रायन्ते मृत्युनोपेतं जरया वापि मानवम् ॥ ७८ ॥ कायः सन्निहितापायः सम्पदः पदमापदाम् । समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ७९ ॥ प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते । आमकुम्भ इवाम्भःस्थो विशीर्णः सन्विभाव्यते ॥ ८० ॥ यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति । विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥ ८१ ॥ पुत्रमित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः । सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ८२ ॥ मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः । अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ ८३॥ तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च । अतीतानागते चोभे स वै सर्वधनी नरः ॥ ८४॥ यदा चायं न बिभेति यदा चास्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ ८५ ॥ यदा न कुरुते भावं सर्वभूतेषु पापकम् । कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ८६ ॥ विनीतमानमोहश्च दुष्टसङ्गविवर्जितः । विज्ञातब्रह्मतत्त्वस्य निर्वाणमुपपद्यते ॥ ८७ ॥ अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः । ऐश्वर्यं

प्रियसंवासो मुह्येत्तत्र न पण्डितः ॥ ८८ ॥ लोहदारुमयैः पाशैः पुमान्बद्धो विमुच्यते । पुत्रदारमयैः पाशैर्बद्धो नैव विमुच्यते ॥८९॥ आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ ९० ॥ मित-मायुर्वयो नित्यं नैति यातं कदाचन । परामृशन्ति तदपि न भवं भोगलोलुपाः ॥ ९१ ॥ इहैव नरकव्याधेश्चिकित्सां न करोति यः । गत्वा निरौषधं स्थानं सरुजः किं करिष्यति ॥९२॥ आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः । मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥ ९३ ॥ यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् । एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः ॥ ९४ ॥ अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् । यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरम् ॥ ९५ ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् । यदि योन्याः प्रमुच्येऽहं तत्सांख्यं योगमभ्यसे ॥ ९६ ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् । यदि योन्याः प्रमुच्यामि ध्याये ब्रह्म सनातनम् ॥ ९७ ॥ जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् । तथाविधमिति ज्ञात्वा शश्वत्कल्या-

णमाचरेत् ॥ ९८ ॥ यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ ९९ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ १०० ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १०१ ॥ यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः । अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १०२ ॥ अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयोवृणीते ॥ १०३ ॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः । श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ १०४ ॥ न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ १०५ ॥ पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ १०६ ॥ दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः । को-

ऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥ १०७
सहसा विदधीत न क्रियामविवेकः परमापदाम्पदम् । वृणुते हि विमृश्य कारिणं गुणलुब्धाः स्वयमेव सम्पदः । १०८ । पाषाणखण्डेष्वपि रत्नबुद्धिः कान्तेति धीः शोणितमांस-पिण्डे । पञ्चात्मके वर्ष्मणि चात्मभावो जयत्यसौ काचन मोहलीला ॥ १०९ ॥ अविदितपरमानन्दो वदति विषयमेव रमणीयम् । तिलतैलमेव मृष्टं येन न दृष्टं घृतं क्वापि ॥११० ॥ निखिलं जगदेव नश्वरं पुनरस्मिन्नितरां कलेवरम् । अथ तस्य कृते कियनयं क्रियते हन्त जनैः परिश्रमः ॥ १११ ॥ नन्दन्ति मन्दाः श्रियमाप्य नित्यं परं विषीदन्ति विपद्-गृहीताः । विवेकदृष्ट्या चरतां नराणां श्रियो न किञ्चि-द्विपदो न किञ्चित् ॥ ११२ ॥ दधति तावदमी विषयाः सुखं स्फुरति यावदियं हृदि मूढता । मनसि तत्त्वविदान्तु विवेचके क्व विषयाः क्व सुखं क्व परिग्रहाः ॥ ११३ ॥ इह चेदवेदीदथ सत्यमस्ति न चेदवेदीन्महती विनष्टिः । भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ११४ ॥ यदुपतेः क्व गता मथुरा पुरी रघुपतेः क्व गतो-

त्तरकोशला । इति विचिन्त्य मनः स्थिरतां कुरु न सदिदं जगदित्यवधारय ॥ ११५ ॥ प्रादुर्भवन्ति वपुषः कति वा न कीटा यान्यत्नतः खलु तनोरपसारयन्ति । मोहः क एष जगतो यदपत्यसंज्ञां तेषां विधाय परिशोषयति स्वदेहम् ॥ ११६ ॥ साधारणे वपुषि काकशृगालवह्निमात्रादिकस्य ममतां त्यज दुःखहेतुम् । तद्वज्जहि बहिरर्थगताञ्च विद्वन् चित्तं बधान परमात्मनि निर्विशङ्कम् ॥ ११७ ॥ गुणवद-गुणवद्वा कुर्वता कार्यमादौ परिणतिरवधार्या यत्नतः पण्डि-तेन । अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ११८ ॥ यत्क्षान्तिः समये श्रुतिः शिवशिवेत्युक्तौ मनोनिर्वृतिर्भैक्षे चाभिरुचिर्गृहेषु विरतिः श-श्वत्समाधौ रतिः एकान्ते वसतिर्गुरून्प्रति नतिः सद्भिः समं सङ्गतिः सत्त्वे प्रीतिरनङ्गनिर्जितिरसौ सन्मुक्तिमार्गे स्थितिः ॥ ११९ ॥ प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् । तृष्णा-स्रोतो विभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ १२० ॥

# वैराग्यप्रशंसा ४२

प्रचण्डवासनावातैरुद्धूता नौर्मनोमयी । वैराग्यकर्णधारेण विना रोद्धुं न शक्यते ॥ १ ॥ नासक्त्वा सुखमाप्नोति नासक्त्वा विन्दते परम् । नासक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भवेत् ॥ २ ॥ रागिण्यपि विरागिण्यः स्त्रियस्तासु रमेत कः । अहञ्च कलये मुक्तिं या विरागिणि रागिणी ॥ ३ ॥ पूरयित्वाऽर्थिनामाशां प्रियं कृत्वा द्विषामपि । पारं गत्वा श्रुतौघस्य धन्या वनमुपासते ॥ ४ ॥ यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥५॥ निःस्नेहो याति निर्वाणं स्नेहोऽनर्थस्य कारणम् । निःस्नेहेन प्रदीपेन यदेतत्प्रकटीकृतम् ॥६॥ येषु येषु दृढं बद्धा भावना दृढवस्तुषु । तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ॥ ७ ॥ नीलोत्पलाभनयनाः परमप्रेमभूषणम् । हासायैव विलासिन्यः क्षणभङ्गितया स्थिताः ॥ ८ ॥ गतेनापि न सम्बन्धो न सुखेन भविष्यता । वर्तमानं क्षणातीतं सङ्गतिः कस्य केन वा ॥ ९ ॥ पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते । सुशोषं सागरजलं शरीरे तत्र का कथा

॥ १० ॥ लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवास्त्वया । न सन्ति खलु तावन्त्यो गङ्गायामपि वालुकाः ॥ ११ ॥ मातृपितृसहस्राणि पुत्रदारशतानि च । तवानन्तानि यातानि कस्य ते कस्य वा भवान् ॥ १२ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १३ ॥ जन्मैव व्यर्थतां नीतं भवभोगप्रलोभिना । काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥१४॥ कोटयो ब्रह्मणां याता गताः सर्गपरम्पराः । प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीवने ॥ १५ ॥ रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा । स्वल्पोदके मत्स्य इव धृतिं विन्देत कः पुमान् ॥ १६ ॥ यस्यां रात्र्यां व्यतीतायां न किञ्चिच्छुभमाचरेत् । तदेव वन्ध्यं दिवसं प्रति विद्याद्विचक्षणः ॥ १७ ॥ जीवितं मरणान्तं हि जरान्ते रूपयौवने । संपदो विपदान्ता वा अत्र को रतिमाप्नुयात् ॥ १८ ॥ न बन्धुरस्ति ते कश्चिन्न त्वं बन्धुश्च कस्यचित् । पथि सङ्गतमेवैतद्दारबन्धुसुहृज्जनैः ॥ १९ ॥ अनित्ये सति मानुष्ये विद्युत्स्फुरणचञ्चले । ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ॥

२०॥ तदनियमिति ज्ञात्वा सर्वभावेष्वनियताम्। सर्वारम्भान् परित्यज्य भव चात्मनि योगवित् ॥ २१ ॥ सवृक्षौषधिरत्नेयं सहसत्त्ववनाकरा । तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ॥ २२ ॥ सञ्चितं सञ्चितं द्रव्यं नष्टं तव पुनः पुनः। कदाचिन्मोक्ष्यसे मूढ धनेहां धनकामुक ॥२३॥ अद्य श्वो वा परश्वो वा मरणं निश्चितं मम। इति मत्वा गृहं त्यक्त्वा हरिसंस्मरणं कुरु ॥ २४ ॥ गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥ २५ ॥ उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः। यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥ २६ ॥ स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान्। वैराग्यकारणं तस्य किमन्यदुपदिश्यते ॥ २७ ॥ मांसासृक्पूयविण्मूत्रस्नायुमज्जाऽस्थिसंहतौ। देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥ २८ ॥ अथ ये महतां मूर्ध्नि ते दिवैर्निपतन्त्यधः। हन्त चित्त महत्तायाः कैषा विश्वस्तता तव ॥ २९ ॥ अधः पश्यसि किं वृद्ध किञ्च ते पतितं भुवि। अरे मूढ न जानासि गतं मे यौवनं धनम् ॥३०॥ यश्चैतान्प्राप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत्। प्रापणात्सर्व-

कामानां परित्यागो विशिष्यते ॥३१॥ न तथैतानि शक्यन्ते संनियन्तुमसेवया । विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः ॥३२॥ अशीमहि वयं भिक्षामाशावासो वसीमहि । शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥३३॥ गृहारम्भो हि दुःखाय न सुखाय कदाचन । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥३४॥ अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ । पथि सङ्गतमेवैतद्भ्राता माता पिता सखा ॥ ३५ ॥ नायमत्यन्तसंवासो लभ्यते जातु केनचित् । अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ ३६ ॥ क्व नु तेऽद्य पिता राजन् क्व नु तेऽद्य पितामहाः । न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽनघ ॥ ३७ ॥ जरामृत्यू हि भूतानां खादितारौ वृकाविव । बलिनां दुर्बलानाञ्च ह्रस्वानां महतामपि ॥ ३८ ॥ न कश्चिज्ज्ञात्वतिक्रामेज्जरामृत्यू हि मानवः । अपि सागरपर्यन्तां विजित्येमां वसुन्धराम् ३९ प्रभावैरन्विता स्तैस्तैः पार्थिवेन्द्राः सहस्रशः । ये गता पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ४० गतानृषींस्तथा देवानसुरांश्च तथा गतान् । लोकादस्मात्परं लोकं यः पश्यति स पश्यति ॥ ४१ ॥ बद्धास्था ये शरीरेषु

बद्धास्था ये जगत्स्थितौ । तान्मोहमदिरोन्मत्तान्धिग्धिगस्तु
पुनः पुनः ॥ ४२ ॥ धनानि बान्धवा भृत्या मित्राणि वि-
भवाश्च ये । विनाशभयभीतस्य सर्वं नीरसतां गतम् ॥४३॥
यतो यतो निवर्तते ततस्ततो विमुच्यते । निवर्तनाद्धि सर्वतो
न वेत्ति दुःखमण्वपि ॥४४॥ न मातृपुत्रबान्धवा न संस्तुतः
प्रियो जनः । अनुव्रजन्ति सङ्कटे व्रजन्तमेकपातिनम् ॥४५॥
यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः । तदनु च
जरया जर्जरदेहे वार्तां कोऽपि न पृच्छति गेहे ॥ ४६ ॥
मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ४७ ॥
किन्ते धनैर्बन्धुभिरेव वा किं दारैश्च किं ब्राह्मण यो मरि-
ष्यति । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः
पिता च ॥ ४८ ॥ मृतं पुत्रं दुःखपुष्टं मनुष्या उत्क्षिप्य
राजन् स्वगृहान्निर्हरन्ति । तं मुक्तकेशाः करुणं रुदन्ति
चितामध्ये काष्ठमिव क्षिपन्ति ॥ ४९ ॥ हरिष्यमाणो बहुधा
परस्वं करिष्यमाणः सुतसम्पदादि । धरिष्यमाणोऽरिशिरःसु
पादं न स्वं मरिष्यन्तमवैति कोऽपि ॥५०॥ कुटुम्बचिन्ता-

कुलितस्य पुंसः कुलञ्च शीलञ्च गुणाश्च सर्वे । अपक्वकुम्भे निहिता इवापः प्रयान्ति देहेन समं विनाशम् ॥ ५१ ॥ प्रबलानिलवेगवेल्लितध्वजचीनांशुककोटिचञ्चले । अपि मूढमतिः कलेवरे कुरुते कः स्थिरबुद्धिमम्बिके ॥ ५२ ॥ कति नाम सुता न लालिताः कति वा नेह वधूरभुञ्जिहि । क्व नु ते क्व च ताः क्व वा वयं भवसङ्गः खलु पान्थसङ्गमः ॥५३ ॥ भ्रमतां भववर्त्मनि भ्रमान्नहि किञ्चित्सुखमम्ब लक्षये । तदवाप्य चतुर्थमाश्रमं प्रयतिष्ये भवबन्धमुक्तये ॥ ५४ ॥ यथा प्रपायां बहवो मिलन्ते क्षणे द्वितीये बत भिन्नमार्गाः । प्रयान्ति तद्वद्बहुनामभाजो गृहे भवन्त्यत्र न कश्चिदन्ते ॥५५ ॥ योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः । प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टबुद्धिः ॥५६ ॥ सुरूपं शरीरं नवीनं कलत्रं धनं मेरुतुल्यं वचश्चारु चित्रम् । हरेरंघ्रियुग्मे मनश्चेदलग्नं ततः किन्ततः किन्ततः किन्ततः किम् ॥ ५७ ॥ पुनः प्रभातं पुनरेव शर्वरी पुनः शशाङ्कः पुनरुद्यते रविः । कालस्य किं गच्छति याति यौवनं तथापि लोकः कथितं न बुध्यते ॥ ५८ ॥ नलिनीदलगतजलमति

तरलं तद्वज्जीवितमतिशयचपलम् । विद्धि व्याधिव्यालग्रस्तं लोकं शोकहतञ्च समस्तम् ॥ ५९ ॥ चेतोहरा युवतयः सुहृदोऽनुकूलाः सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः । गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः संमीलने नयनयोर्नहि किञ्चिदस्ति ॥ ६० ॥ मित्रं कलत्रमितरः परिवारलोको भोगैकसाधनमिमाः किल सम्पदो नः । एकः क्षणः स तु भविष्यति यत्र भूयो नायं न यूयमितरे न वयं न चैते ॥ ६१ ॥ व्याघ्रीव तिष्ठति जरा परितर्जयन्ती रोगाश्च शत्रव इव प्रहरन्ति देहम् । आयुः परिस्रवति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ६२ ॥ पातालमाविशसि यासि नभो विलंघ्य दिङ्मण्डलं भ्रमसि मानस चापलेन । भ्रान्त्वाऽपि देशमपरं हि तदात्मनीनं न ब्रह्म संस्मरसि निर्वृत्तिमेषि येन ॥ ६३ ॥ यां चिन्तयामि सततं मयि सा विरक्ता साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः। अस्मत्कृते च परितुष्यति काचिदन्या धिक्तांश्च तञ्च मदनञ्च इमाञ्च माञ्च ॥ ६४ ॥ केचिद्वदन्ति धनहीनजनो जघन्यः केचिद्वदन्ति गुणहीनजनो जघन्यः । व्यासो वदत्यखिलवेद-

विशेषविज्ञो नारायणस्मरणहीनजनो जघन्यः ॥६५॥ रोगा हरन्ति सततं प्रबलाः शरीरं कामादयोऽप्यनुदिनं प्रदहन्ति चित्तम् । मृत्युश्च नृत्यति सदा कलयन्दिनानि तस्मात्त्वमद्य शरणं मम दीनबन्धो ॥ ६६ ॥ देहो विनश्यति सदा परीणामशीलश्चित्तञ्च खिद्यति सदा विषयानुरागि । बुद्धिःसदा हि रमते विषयेषु नान्तस्तस्मात्वमद्य० ॥ ६७ ॥ आयुर्विनश्यति यथाऽऽमघटस्थतोयं विद्युत्प्रभेव चपला बत यौवनश्रीः । वृद्धा प्रधावति यथा मृगराजपत्नी तस्मात् ॥ ६८ ॥ सत्सङ्गतीह विदिता तव भक्तिहेतुः सऽप्यद्य नास्ति बत पण्डितमानिनो मे । तामन्तरेण न हि सा क्व च बोधवार्ता तस्मात्० ॥ ६९ ॥ दृष्टिर्न भूतविषया समताऽभिधाना वैषम्यमेव तदियं विषयीकरोति । शान्तिः कुतो मम भवेत्समता न चेत्स्यात्तस्मात्० ॥७०॥ मैत्री समेषु न च ममास्ति कदाऽपि नाथ दीने तथा न करुणा मुदिता च पुण्ये । पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्तस्मात्० ॥७१॥ नेत्रादिकं मम बहिर्विषयेषु सक्तं नान्तर्मुखं भवति तान्प्रविहाय तस्य । क्वान्तर्मुखत्वमपहाय सुखस्य वार्ता तस्मात्० ॥ ७२ ॥ ज्ञानं

यथा मम भवेत्कृपया गुरूणां सेवां तथा न विधिनाऽकरवं हि तेषाम् । सेवाऽपि साधनतया विदिताऽस्ति चित्तेस्तस्मात्त्वमद्य शरणं मम दीनबन्धो ॥ ७३ ॥ धर्मात्मजेन चरणाविह वन्दितौ मे भीमेन सार्धमिह संकथिताः कथाश्च । अत्रार्जुनश्च यमजौ च सहानुयातौ स्थानानि तानि खलु सन्ति न ते मनुष्याः ॥ ७४ ॥ अहमिह कृतविद्यो वेदिता सत्कलानां धनपतिरहमेको रूपलावण्ययुक्तः । इतिकृतगुणगर्वः खिद्यते किं जनोऽयं कतिपयदिनमध्ये सर्वमेतन्न किञ्चित् ॥ ७५ ॥ विसमलमशनाय स्वादु पानाय तोयं शयनमवनिपृष्ठे वल्कले वाससी च । नवधनमधुपानभ्रान्तसर्वेन्द्रियाणामविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ ७६ ॥ वयमिह परितुष्टा वल्कलैस्त्वञ्च लक्ष्म्या सम इह परितोषो निर्विशेषो विशेषः । स तु भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ ७७ ॥ निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः । शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने अहो दुष्टः कायस्तदपि मरणापायचकितः ॥७८॥ अमीषां प्राणानां तुलितबिसिनीपत्रपयसां कृते

किन्नास्माभिर्विगलितविवेकैर्व्यवसितम्। यदाढ्यानामग्रे द्रविणमदनिःशङ्कमनसां कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ७९ ॥ तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं गुणोदर्कान्दारानुत परिचरामः सविनयम् । पिबामः शास्त्रौघानुत विविधकाव्यामृतरसान् न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ८० ॥ अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ८१ ॥ श्रियो दोलालोला विषयजरसाः प्रान्तविरसा विपद्गेहं देहं महदपि धनं भूरिनिधनम् । बृहच्छोको लोकः सततमबला दुःखबहुलास्तथाऽप्यस्मिन्घोरे पथि वत रता हन्त कुधियः ॥ ८२ ॥ वयं येभ्यो जाताश्चिरतरगता एव खलु ते समं यैः संवृद्धाः स्मरणपदवीं तेऽपि गमिताः । इदानीमेते स्मः प्रतिदिवसमासन्नपतना गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ८३ ॥ अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां वियोगे धीराणां क इह परितापस्य विषयः । क्षणादुत्पद्यन्ते विलयमपि यान्ति

क्षणममी न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥८४॥ पुरा विद्वत्ताऽऽसीदुपशमवतां क्लेशहतये गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् । इदानीन्तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखानहो कष्टं सापि प्रतिदिनमधोऽधः प्रविशति ॥ ८५ ॥ अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् । व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं सक्तास्त्वेते शमसुखमनन्तं विदधति ॥ ८६ ॥ धनं तावल्लब्धं कथमपि तथाप्यस्य नियतो व्ययो वा नाशो वा तत्र सति वियोगोऽप्युभयथा । अनुत्पादः श्रेयान्किमु कथय तस्याथ विलयो विनाशो लब्धस्य व्यथयतितरां न त्वनुदयः ॥८७॥ अतिक्रान्तः कालो ललितललनाभोगसुखदो भ्रमन्तः शान्ताः स्मः सुचिरमिह संसारसरणौ । इदानीं स्वः सिन्धोस्तटभुवि समाक्रन्दनगिरः सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ ८८ ॥ महाशय्या भूमिर्मसृणमुपधानं भुजलता वितानश्चाकाशं व्यजनमनुकूलोऽयमनिलः । स्फुरद्दीपश्चन्द्रः स्वधृतिवनितासङ्गमुदितः सुखं शान्तः शेते विगतभवभीतिर्नृप इव ॥८९॥ अजानन्दाहार्तिं

पतति शलभस्तीव्रदहने न मीनोऽपि ज्ञात्वा वडिशयुतमश्नाति पिशितम् । विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥९०॥ क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः। क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ९१ ॥ कृतान्तस्य दूती जरा कर्णमूले समागत्य वक्तीति लोकाः शृणुध्वम् । परस्त्रीपरद्रव्यवाञ्छां त्यजध्वं भजध्वं रमानाथपादारविन्दम् ॥ ९२ ॥ गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते। वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ ९३ ॥ बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः । हातव्योऽयमसार एष विरसः संसार इत्यादिकं सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ ९४ ॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाऽभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि कवयो

दिक्षु प्रतन्वन्ति नः । इत्थं मानद नातिदूरमुभयोरप्यावयो-
रन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः
॥ ९५ ॥ चाण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं ता-
पसः किं वा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम् ।
इत्युत्पन्नविकल्पजल्पमुखरैः सम्भाष्यमाणा जनैर्न क्रुद्धाः
पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥९६॥ नास्माकं
शिविका न चास्ति कटकाद्यालंक्रियासत्क्रिया नोतुङ्गस्तुरगो
न कश्चिदनुगो नाप्यम्बरं सुन्दरम् । किन्तु क्ष्मातलवर्त्य-
शेषविदुषां ब्रह्मात्मविद्याजुषां चेतस्तोषकरी शिरोनतिकरी
विद्याऽनवद्याऽस्ति नः ॥९७॥ आयुर्वर्षशतं नृणां परिमितं
रात्रौ तदर्धं गतं तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते जीवे वारि-
तरङ्ग बुदबुदसमे सौख्यं कुतः प्राणिनाम् ॥९८॥ रम्यं हर्म्यतलं
न किं वसतये श्राव्यं न गेयादिकं किं वा प्राणसमासमा-
गमसुखं नैवाधिकं प्रीतये । किन्तूद्भ्रान्तपतत्पतङ्गपवनव्या-
लोलदीपाङ्कुरच्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं
गताः ॥ ९९ ॥ भोगा मेघवितानमध्यविलसत्सौदामिनीच-

ञ्चला आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भंगुरम् । लोला यौवनलालसा तनुभृतामित्याकलय्य द्रुतं योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥१००॥ आयूंषि क्षणिकानि यौवनमपि प्रायो जराऽध्यासितं संयोगा विरहावसानविरसा भोगाः क्षणध्वंसिनः । जानन्तोऽपि यथाऽव्यवस्थितमिदं लोकाः समस्तं जगच्चित्रं यद्गुरुगर्वभावितधियः क्रुध्यन्ति माद्यन्ति च ॥ १०१ ॥ रात्रिः सैव पुनः स एव दिवसो मत्वाऽबुधा जन्तवो धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः । व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ १०२ ॥ ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं यन्मुञ्चन्त्युपभोगवन्त्यपि धनान्येकान्ततो निःस्पृहाः । न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्ता वयम् ॥ १०३ ॥ आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी । मोहावर्तसुदुस्तराऽतिगहना प्रोतुङ्गचिन्तातटी तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः

॥ १०४ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ १०५ ॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं मौने दैन्यभयं बले रिपु-भयं रूपे जराया भयम् । शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ १०६ ॥ याच्ञाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः । संसा-रार्णवलंघनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १०७ ॥ धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी सत्यं सूनुरयं दया च भगिनी भ्राता मनः संयमः । शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनमेते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥ १०८ ॥ यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो ना-युषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्

सन्दीप्ते भुवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ १०९ ॥
अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूर-
स्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः । सेवन्ते त्वां
धनाढ्या मतिमलहतये मामपि श्रोतुकामा मय्यप्यास्था न
चेत्तत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥ ११० ॥

## परसेवा ४३

सेवया धनमिच्छद्भिः सेवकैः पश्य किं कृतम् । यत्स्वा-
तन्त्र्यं शरीरस्य मूढैस्तदपि हारितम् ॥ १ ॥ मौनान्मूको
भाषणाच्च धूर्तो वा जल्पकस्तथा । पार्श्ववर्ती च धृष्टः स्या-
दप्रगल्भश्च दूरतः ॥ २ ॥ क्षान्त्या भीरुः कोपयुक्तो मूर्खः
सेवक उच्यते । रूपवांश्च भवेज्जारः सेवाधर्मोऽतिदुर्गमः ॥ ३
॥ सेवा श्ववृत्तिर्यैरुक्ता न तैः सम्यगुदाहृतम् । स्वच्छन्द-
चारी कुत्र श्वा विक्रीतासुः क्व सेवकः ॥ ४ ॥ भूशय्या
ब्रह्मचर्यं च कृशत्वं लघुभोजनम् । सेवकस्य यतेर्यद्वद्विशेषः
पापधर्मजः ॥ ५ ॥ वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् ।
पुंसां विवेकहीनानां सेवया न धनार्जनम् ॥ ६ ॥ स्वाभि-
प्रायपरोक्षस्य परचित्तानुवर्तिनः । स्वयं विक्रीतदेहस्य

सेवकस्य कुतः सुखम् ॥ ७ ॥ मृदुनाऽतिसुवृत्तेन सुमृष्टेनातिहारिणा । मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥८॥ पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः । कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते।९।जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः । दरिद्रो व्याधितो मूर्खः प्रवासी नीचसेवकः ॥ १० ॥ चलेषु स्वामिचित्तेषु सुलभे पिशुने जने । यदि जीवन्त्यहो चित्रं क्षणमप्युपजीविनः ॥ ११ ॥ नाश्नाति सेवयौत्सुक्यादनिद्रो न प्रबुध्यते । न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥१२॥ या प्रकृत्यैव चपला निपतत्यशुचावपि । स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ १३ ॥ मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् । प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥ १४ ॥ शीतातपादिकष्टानि सहते यानि सेवकः । धनाय तानि चाल्पानि यदि धर्माय मुच्यते ॥१५॥ एतद्धि जन्मसाफल्यं यदनायत्तवृत्तिता । ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ १६ ॥ स्वयं जहाति सेवकः सुखं च मानमेव च । यदर्थमर्थमीहते तदेव तस्य हीयते ॥ १७ ॥ प्रणमत्युन्नति-

हेतोर्जीवनहेतोर्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः को मूर्खः सेवकादन्यः ॥ १८ ॥ विज्ञैः स्निग्धैरुपकृतमपि द्वेषतामेति कश्चित् साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति । चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १९ ॥ आहारे बडवानलश्च शयने यः कुम्भकर्णायते संदेशे बधिरः पलायनविधौ सिंहः श्रृगालो रणे । अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः॥२०॥

## राजधर्माः ४४

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् । राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ १ ॥ धार्मिकं पालनपरं सम्यक्परपुरञ्जयम् । राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥ २ ॥ पर्जन्य इव भूतानामाधारः पृथिवीपतिः । विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ ३ ॥ सर्वदेवमयो राजा मनुना संप्रकीर्तितः । तस्मात्तमेव सेवेत न व्यलीकेन कर्हिचित् ॥ ४ ॥ सर्वदेवमयस्यापि विशेषो भूपतेरयम् । शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥ ५ ॥ बालोऽपि ना-

अवमन्तव्यो मनुष्य इति भूमिपः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ६ ॥ स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः । वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता ॥७॥ अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् । रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥ ८ ॥ यस्य प्रसादे पद्माऽऽस्ते विजयश्च पराक्रमे । मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ९ ॥ पात्रे त्यागी गुणे रागी भोगी परिजनैः सह । भावबोद्धा रणे योद्धा प्रभुः पञ्चगुणो भवेत् ॥१०॥ आक्षेपवचनं तस्य न वक्तव्यं कदाचन । अनुकूलं प्रियञ्चास्य वक्तव्यं जनसंसदि ॥ ११ ॥ यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः । कुलीनो वाऽकुलीनो वा स श्रियो भाजनं भवेत् ॥ १२ ॥ कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः । अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ १३ ॥ नयनाभ्यां प्रसुप्तोऽपि जागर्ति नयचक्षुषा । व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥ १४ ॥ अश्वमेधसहस्रेण यो यजेत्पृथिवीपतिः । पालयेद्वापि धर्मेण प्रजास्तुल्यं फलं लभेत् ॥१५॥ किन्तस्य तपसा राज्ञः किन्तस्याध्वरैरपि । सुपालितप्रजो यः स्यात्स-

र्वधर्मविदेव सः ॥ १६ ॥ सदाऽनुरक्तप्रकृतिः प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥ १७ ॥ यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजाः । अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ १८ ॥ न तिष्ठन्ति स्वस्वधर्मे विना पालेन वै प्रजाः । प्रजया तु विना स्वामी पृथिव्यां नैव शोभते ॥१९॥ सुवर्णैः पट्टचेलैश्च शोभा स्याद्दारयोपिताम् । पराक्रमेण दानेन राजन्ते राजनन्दनाः ॥ २० ॥ तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् । नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥२१॥ राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् । राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ २१ ॥ कृपणानाथवृद्धानां यदश्रुपरिमार्जति । हर्षं संजनयन् नृणां स राज्ञो धर्म उच्यते ।२२। इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् । यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ २३ ॥ यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः । तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ २४ ॥ पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् । मालाकार इवारामे न यथाऽङ्गारकारकः ॥ २५ ॥ यथा वीजांकुरः लूक्ष्मः प्रयत्ने-

जाभिरक्षितः । फलप्रदो भवेत्काले तद्वल्लोकाः सुरक्षिताः ॥ २६ ॥ लोकानुग्रहकर्तारः प्रवर्द्धन्ते नरेश्वराः । लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥२७॥ मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया । सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥ २८॥ राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्तन्ते यथा राजा तथा प्रजाः २९ इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् । जितेन्द्रियो हि शक्नोति वशे स्थपयितुं प्रजाः ॥ ३० ॥ न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः । बुद्धितो मित्रतश्चापि सततं वसुधाधिपः॥३१ ॥सर्वस्मादधिको दाता शूरस्त्वं धार्मिको ह्यसि । इति वाचं न शृणुयात श्रावका वञ्चकास्तु ते॥३२॥आत्मानं प्रथमं राजा विनयेनोपपादयेत् । ततः पुत्रांस्ततोऽमात्यांस्ततो भृत्यांस्ततः प्रजाम् ॥ ३३ ॥ सुजनैः सङ्गतं कुर्याद्धर्माय च सुखाय च । सेव्यमानस्तु सुजनैर्महानतिविराजते ॥३४॥ नित्यं मनोऽपहारिण्या वाचा प्रह्लादयेज्जगत् । उद्वेजयति भूतानि क्रूरवाक् धनदोऽपि सन् ॥ ३५ ॥ नृपाणाञ्च नराणाञ्च केवलं तुल्यमूर्तिता । आधिक्यन्तु क्षमा धैर्यमाज्ञा दानं पराक्रमः॥

३६ ॥ प्रजां न रक्षयेद्यस्तु राजा रक्षादिभिर्गुणैः । अजा-गलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ३७ ॥ अजामिव प्रजां हन्याद्यो मोहात्पृथिवीपतिः । तस्यैका जायते तृप्ति-र्द्वितीया न कथञ्चन ॥ ३८ ॥ प्रजापीडनसन्तापात्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते ॥ ३९ ॥ प्रकृतिः स्वामिनं त्यक्त्वा समृद्धाऽपि न जीवति । अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ ४० ॥ गजा-श्वरथयानन्तु प्रातः सायं सदाऽभ्यसेत् । व्यूहाभ्यासं सैनि-कानां स्वयं शिक्षेच्च शिक्षयेत् ॥ ४१ ॥ अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् । विशेषतोऽसहायेन किन्तु राज्यं महो-दयम् ॥ ४२ ॥ मौलान् शास्त्रविदः शूरान् लब्धलक्षान्कु-लोद्गतान् । सचिवान्सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥ ४३ ॥ व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः । रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः ॥ ४४ ॥ निरालसा जितक्रोधकामलोभाः प्रियंवदाः । राज्ञा नियोजितव्यास्ते सभ्याः सर्वासु जातिषु ॥ ४५ ॥ अमात्यमुख्यं धर्मज्ञं प्राज्ञं दान्तं कुलोद्गतम् । स्थापयेदासने तस्मिन् खिन्नः कार्येक्षणे

नृणाम् ॥ ४६ ॥ कर्मशीलगुणाः पूज्यास्तथा जातिकुले नहि । न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते ॥ ४७ ॥ अधिकारे क्षमं दृष्ट्वा ह्यधिकारे नियोजयेत् । नाधिकारं चिरं दद्याद्यस्मै कस्मै सदा नृपः ॥ ४८ ॥ अधिकारमदं पीत्वा को न मुह्येत्पुनश्चिरम् । अतः कार्यक्षमं दृष्ट्वा कार्येऽन्यस्मिन्नियोजयेत् ॥ ४९ ॥ एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते । निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा स्वतन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभिद्रुह्यति॥५० ॥ सन्मन्त्रिणा वर्धयते नृपाणां लक्ष्मीमहिधर्मयशःसमूहः । दुर्मन्त्रिणा नाशयते तथैव एवं पुरावृत्तविदो वदन्ति ॥ ५१ ॥ स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संश्रृणुते स किं प्रभुः । सदाऽनुकूलेषु हि कुर्वते स्थितिं नृपेष्वमात्येषु च सर्वसम्पदः ॥ ५२ ॥ नियुक्तहस्तार्पितराज्यभारास्तिष्ठन्ति ये सौधविहारसाराः । बिडालवृन्दार्पितदुग्धपूराः स्वपन्ति ते मुढधियः क्षितीन्द्राः ॥५३॥ नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थि-

वेन्द्रैः । इति महति विरोधे वर्तमाने समाने नरपतिजनपदानां दुर्लभः कार्यकर्ता ॥ ५४ ॥ यः संमानं समाधत्ते भृत्यानां क्षितिपोऽधिकम् । वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥ ५५ ॥ यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत् । कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥५६॥ अपृष्टस्तु नरः किञ्चिद्यो ब्रूयाद्राजसंसदि । न केवलमसंमानं लभते च विडम्बनम् ॥ ५७ ॥ श्रोत्रियं व्याधितार्तौ च बालवृद्धावकिञ्चनम् । महाकुलीनमार्यञ्च राजा संपूजयेत्सदा ॥ ५८ ॥ म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम् । न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥ ५९ ॥ बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः । वनस्था अपि राज्यानि विनयात्प्रतिपेदिरे ॥ ६० ॥ मृगयाऽक्षास्तथा पानं गर्हितानि महीभुजाम् । दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णीषु ॥ ६१ ॥ अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः । इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते नरः ॥ ६२ ॥ यस्तु शत्रोर्वशस्थस्य शक्तोऽपि कुरुते दयाम् । हस्तप्राप्तस्य वीरस्य तं चैव पुरुषं विदुः ॥६३॥ धान्यानां

संग्रहो राजन्नुत्तमः सर्वसंग्रहात् । निक्षिप्तं हि मुखे रत्नं न
कुर्यात्प्राणधारणम् ॥ ६४ ॥ विद्याकलानां वृद्धिः स्यात्तथा
कुर्यान्नृपः सदा । विद्याकलोत्तमान्दृष्ट्वा वत्सरे पूजयेच्च तान्
६५॥ राज्ञो हि रक्षाऽधिकृताः परस्वादायिनः शठाः । भृत्या
भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥६६॥ ये कार्यिके-
भ्योऽर्थमेव गृह्णीयुः पापचेतसः । तेषां सर्वस्वमादाय राजा
कुर्यात्प्रवासनम् ॥६७॥ ग्रामान्पुराणि देशांश्च स्वयं संवीक्ष्य
वत्सरे । अधिकारिगणैः काश्च रञ्जिताः काश्च कर्षिताः ॥
६८ ॥ प्रजास्ताः साधुभूतेन व्यवहारं विचिन्तयेत् । न भृत्य-
पक्षपाती स्यात्प्रजापक्षं समाश्रयेत् ॥ ६९ ॥ प्रजाशतेन स-
न्दिष्टं सन्त्यजेदधिकारिणम् । अमात्यमपि संवीक्ष्य सकृदन्या-
यगामिनम् ॥ ७० ॥ मूर्खं व्यसनिनं लुब्धमप्रगल्भं भया-
कुलम् । क्रूरमन्यायकर्तारं नाधिपत्ये नियोजयेत् ॥ ७१ ॥
स ह्यमात्यः सदा श्रेयान् काकिणीं यः प्रवर्धयेत् । कोशः
कोशवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥ ७२ ॥ पृष्टो
ब्रूते न सत्यं यः परिणामे सुखावहम् । मन्त्री चेत्प्रियवक्ता
स्यात्केवलं स रिपुः स्मृतः ॥७३॥ अप्रियाण्यपि पथ्यानि

ये वदन्ति नृणामिह । त एव सुहृदः प्रोक्ता अन्ये स्युर्नाम-धारकाः ॥ ७४ ॥ अप्रियस्यापि पथ्यस्य परिणामः सुखा-वहः । वक्ता श्रोता च यत्रास्ति रमन्ते तत्र सम्पदः ॥७५॥ सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य तु प-थ्यस्य वक्ता श्रोता च दुर्लभः ॥ ७६ ॥ यो हि धर्मं समा-श्रित्य हित्वा भर्तुः प्रियाप्रिये । अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ ७७ ॥ यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् । लज्जया वक्ति नो किञ्चित्तेन राजा सहाय-वान् ॥७८॥ युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे । प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ ७९ ॥ संमतोऽहं प्रभोर्नित्यमिति मत्वा व्यतिक्रमेत् । कृच्छ्रेष्वपि न मर्य्यादां स भवेद्राजवल्लभः ॥८०॥ ताडितोऽपि दुरुक्तोऽपि दण्डितो-ऽपि महीभुजा । न चिन्तयति यः पापं स भृत्योऽर्हो मही-भुजाम् ॥८१॥ योऽनाहूतः समभ्येति द्वारे तिष्ठति सर्वदा । पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥८२॥ अना-दिष्टोऽपि भूपस्य दृष्ट्वा हानिकरञ्च यः । यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥८३॥ न क्षुधा पीड्यते यस्तु नि-

द्रया न कदाचन । न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ ८४ ॥ श्रुत्वा सांग्रामिकीं वार्तां भविष्यां स्वामिनं प्रति । प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ८५ ॥ सीमावृद्धिं समायाति शुक्लपक्ष इवोडुराट् । नियोगसंस्थिते यस्मिन् स भृत्योऽर्हो महीभुजाम् ॥ ८६ ॥ अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः । स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥ ८७ ॥ तृणैरावेष्ट्यते रज्जुस्तया नागो हि बध्यते । एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ॥ ८८ ॥ शिरसा विधृता नित्यं तथा स्नेहेन पालिताः । केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ८९ ॥ राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति । तेऽपि संमानमात्रेण प्राणैः प्रत्युपकुर्वते ॥९०॥ अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् । वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥९१॥ इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः । समयज्ञः स्वामिभक्तः प्रतीहारी स इष्यते ॥९२॥ समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः । शौर्यवीर्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ ९३ ॥ सालसं मुखरं क्रूरं स्तब्धं व्यसनिनं शठम् । असं-

तुष्टमभक्तश्च त्यजेद्भृत्यं नराधिपः ॥९४॥ आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः । भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥९५॥ मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् । भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ ९६ ॥ मूर्खे नियुज्यमाने तु त्रयो दोषा महीपतेः । अयश्चार्थनाशश्च नरके गमनं तथा ॥९७॥ प्राज्ञे नियुज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः । यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥९८॥ कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् । फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ ९९ ॥ कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः । कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ १०० ॥ कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा । सम्भवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥ १०१ ॥ निर्विशेषो यदा राजा समं भृत्येषु तिष्ठति । तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ १०२ ॥ काचे मणिर्मणौ काचो येषां बुद्धिः प्रवर्तते । न तेषां सन्निधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ १०३ ॥ प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः । न तं राजानमिच्छन्ति षण्ढं पतिमिवाङ्गनाः ॥ १०४ ॥

दुर्योधनः समर्थोऽपि दुर्मन्त्री प्रलयं गतः । राज्यमेकश्चकारोच्चैः सुमन्त्री चन्द्रगुप्तकः ॥ १०५ ॥ अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः । यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ १०६ ॥ सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ १०७ ॥ तस्मात्सभ्यः सभां गत्वा रागदोषविवर्जितः । वचस्तथाविधं ब्रूयाद्यथा न नरकं व्रजेत् ॥ १०८ ॥ अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् । देवानाञ्च विनश्येत स द्रुतं सुमहानपि ॥ १०९ ॥ अभिभूतोऽप्यवज्ञातो यो राज्ञां द्वारि तिष्ठति । स तु राज्ञां श्रियं भुङ्क्ते नाभिमानी कदाचन ॥ ११० ॥ रुष्टोऽपि राजा यद्दद्यान्न तत्तुष्टो वणिग्जनः । अतो भूमिपतिः सेव्यस्त्याज्यो दूरतरेण सः ॥१११॥ सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ११२ ॥ ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः । प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ ११३ ॥ अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् । प्राप्नुयाद्बुद्ध्यवज्ञानमपमानञ्च शाश्वतम् ॥ ११४ ॥

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमता युक्ता हन्ति राष्ट्रं सनायकम् ॥११५॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च पत्तिभिः । कार्यं संसद्धिमभ्येति यथा बुध्या प्रसाधितम् ॥ ११६ ॥ जनं जनपदा नित्यमर्चयन्ति नृपार्चितम्। नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ ११७ ॥ यं यं नृपोऽनुरागेण सम्भावयति संसदि । तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः ॥ ११८ ॥ आज्ञा कीर्तिः पालनं सज्जनानां दानं भोगो मित्रसंरक्षणञ्च । येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ११९ ॥ यदि तव हृदयं विद्वन्सुनयं स्वप्नेऽपि मा स्म सेविष्ठाः । सचिवजितं षण्ढजितं युवतिजितञ्चैव राजानम् ॥ १२० ॥ अविद्वानपि भूपालो विद्यावृद्धोपसेवया । परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ १२१ ॥ गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥१२२॥ षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णः स्थिरो भवेत् । द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति ॥ १२३ ॥ यः काकिणीमप्यपथप्रपन्नां समुद्धरेन्निष्कसहस्रतुल्याम् । कालेषु कोटिष्वपि

मुक्तहस्तस्तं राजसिंहं न जहाति लक्ष्मीः ॥ १२४ ॥ अति-व्ययोऽनवेक्षा च तथाऽर्जनमधर्मतः । मोक्षणं दूरसंस्थानं कोशव्यसनमुच्यते ॥१२५॥ क्षिप्रमायमनालोच्य व्ययानश्च स्ववाञ्छया । परिक्षीयत एवासौ धनी वैश्रवणोपमः॥१२६॥ कितवा यं प्रशंसन्ति यं प्रशंसन्ति चारणाः । यं प्रशंसन्ति बन्धक्यः स पार्थ पुरुषाधमः ॥१२७॥ राजानो यं प्रशंसन्ति यं प्रशंसन्ति वै द्विजाः । साधवो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः ॥ १२८ ॥ सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः । एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ १२९ ॥ वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु । परीक्ष्यकारिणं धीरमत्यर्थं श्रीर्निषेवते ॥ १३० ॥ गृहे यत्क्षत्रियस्यापि निधनं तद्विगर्हितम् । अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥ १३१ ॥ अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे । यदयोनिधनं याति सोऽस्य धर्मः सनातनः ॥ १३२ ॥ कृपणं विलपन्नार्तो जरयाऽभिपरिप्लुतः । म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ॥ १३३ ॥ यो हि तेजो यथाशक्ति न दर्शयति विक्रमात् । क्षत्रियो जीविताकांक्षी स्तेन इत्येव तं

विदुः ॥ १३४ ॥ यो न दर्शयते तेजः क्षत्रियः काल आगते । सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥१३५॥ नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते । नादण्डस्य प्रजा राज्ञः सुखं विन्दन्ति भारत ॥ १३६ ॥ अविक्षतेन देहेन प्रलयं योऽधिगच्छति । क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥ १३७ ॥ परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः । स्तेनानां निग्रहादस्य यशो राष्ट्रञ्च वर्धते ॥ १३८ ॥ विक्रोशोन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः । संपश्यतः सभृत्यस्य मृतः स न तु जीवति ॥ १३९ ॥ अश्वा यस्य जयस्तस्य यस्याश्वास्तस्य मेदिनी । अश्वा यस्य यशस्तस्य यस्याश्वास्तस्य काञ्चनम् ॥ १४० ॥ निपत्य युधि वेगेन मिषतां सर्वधन्विनाम् । शत्रुं निहत्य यात्येकः शूरो वाजिप्रभावतः ॥ १४१ ॥ शस्त्रास्त्रैर्भिन्नदेहोऽपि श्रान्तोऽपि गुरुभारतः । न मुञ्चति रणे नाथमतः कोऽन्यो हयात्सुहृत् ॥ १४२ ॥ दूरस्थोऽपि बली शत्रुर्न शेते रजनीष्वपि । तस्य भीत्या गृहे यस्य हरयो वेगवत्तराः ॥१४३॥ एकः शतं योधयति प्राकारस्थो धनुर्धरः । शतं शतसहस्राणि तस्माद् दुर्गं विशिष्यते ॥१४४॥

पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः । जये भवति सन्देहः प्रधानपुरुषक्षयः ॥ १४५ ॥ यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम् । अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः क्रियेत ॥ १४६ ॥ आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः । युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ १४७ ॥ यत्र तत्र हतः शूरः शत्रुभिः परिवारितः । अक्षयाँल्लभते लोकान्यदि क्लीबं न भाषते ॥ १४८ ॥ यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परैः । भर्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥१४९॥ यस्माददान्तान्दमयत्यशिष्टान्दण्डयत्यपि। दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥१५०॥ यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः । प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ १५१ ॥ राजदण्डभयादेके पापाः पापं न कुर्वते । यमदण्डभयादेके परलोकभयादपि ॥ १५२ ॥ परस्परभयादेके पापाः पापं न कुर्वते । एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ १५३ ॥ दण्डस्य भयादेके न खादन्ति परस्परम् । अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत्

॥ १५४ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥ १५५ ॥ नाभीतो यजते राजन्नाभीतो दातुमिच्छति । नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥ १५६ ॥ क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः । हस्तियन्ता गजस्येव शिर एवारुरुक्षति ॥ १५७ ॥ तस्मान्नैव मृदुर्नित्यं तीक्ष्णो नैव भवेन्नृपः । वासन्तार्क इव श्रीमान्न शीतो न च घर्मदः॥१५८॥सम्यग्दण्डधरो नित्यं राजा धर्ममवाप्नुयात् । नृपस्य सततं दण्डः सम्यग्धर्मः प्रशस्यते ॥ १५९ ॥ सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः । दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ १६० ॥ अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः । तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥१६१॥ पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥१६२॥ कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः । तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥ १६३ ॥ दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥१६४॥ समीक्ष्य

स धृतः सम्यक् सर्वा रञ्जयति प्रजाः । असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥१६५॥ दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः । सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ १६६ ॥ अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छति ॥ १६७ ॥ तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः । तीक्ष्णश्चैव मृदुश्चैव राजा भवति संमतः ॥१६८॥ कच्चिदग्निभयाच्चैव सर्वं व्यालभयात्तथा । रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ॥१६९॥ कच्चिदन्धांश्च मूकांश्च पंगून् व्यङ्गानबान्धवान् । पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ॥ १७० ॥ कच्चित्कृषिकरा राष्ट्रं न जहत्यतिपीडिताः । ये वहन्ति धुरं राज्ञां ते भरन्तीतरानपि॥१७१॥ कच्चिद्दारान्मनुष्याणां तवार्थे मृत्युमीयुषाम् । व्यसनञ्चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ १७२ ॥ कच्चित्कोशश्च कोष्ठञ्च वाहनं द्वारमायुधम् । आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ॥१७३॥ कच्चिज्ज्ञातीन्गुरून्वृद्धान्वणिजः शिल्पिनः श्रितान् । अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् ॥ १७४ ॥ कच्चिन्नायव्यये युक्ताः सर्वे गणकलेखकाः । निवेदयन्ति पूर्वाह्णे

नित्यमायं व्ययं तव ॥ १७५ ॥ षडनर्था महाराज कच्चित्ते पृष्ठतः कृताः । निद्रालस्यं भयं क्रोधो मार्दवं दीर्घसूत्रता ॥ १७६ ॥ कच्चिच्छृणोषि साधूनां धर्मार्थसहिता गिरः । नित्यं शास्त्रविदां तात यथाधर्मार्थदर्शिनाम्॥१७७॥ निग्रहेण हि पापानां साधूनां संग्रहेण च। द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥ १७८ ॥ क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् । बालवृद्धातुराणाञ्च कुर्वता हितमात्मनः ॥ १७९॥यः क्षिप्तो मर्षयत्यार्तैस्तेन स्वर्गे महीयते । यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥१८०॥ प्रजानां धर्मषड्भागो राज्ञो भवति रक्षतः । अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः॥१८१॥ यानि मिथ्याऽभिभूतानां पतन्त्यश्रूणि रोदताम् । तानि सन्तापकान्घ्नन्ति सपुत्रपशुबान्धवान् ॥ १८२ ॥ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम् । नहि दुर्बलदग्धानां काले किञ्चित्प्ररोहति ॥१८३॥ मा तात सम्पदामग्रमारूढोऽस्मीति विश्वसीः । दूरारोहपरिभ्रंशविनिपातो हि दारुणः ॥१८४॥ वित्तं यदा यस्य समं विभक्तं गूढश्चरः संनिभृतश्च मन्त्रः । न चाप्रियं प्राणिषु यो ब्रवीति स सागरान्तां पृथिवीं प्रशास्ति

॥१८५॥ यस्तात न क्रुध्यति सर्वकालं भृत्यस्य भक्तस्य हिते रतस्य । तस्मिन् भृत्या भर्त्तरि विश्वसन्ति न चैनमापत्सु परित्यजन्ति ॥ १८६ ॥ व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः । प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥ १८७ ॥ राजन् दुधुक्षसि यदि क्षितिधेनुमेतां तेनाद्यवत्समिव लोकममुं पुषाण । तस्मिंश्च सम्यगनिशं परिपोष्यमाणे नानाफलैः फलति कल्पलतेव भूमिः ॥ १८८ ॥ नृपः कामासक्तो गणयति न कार्यं न च हितम् यथेच्छं स्वच्छन्दश्चरति किल मत्तो गज इव । ततो मानध्मातः पतति तु यदा शोकगहने तदा भृत्ये दोषान्क्षिपति न निजं वेत्त्यविनयम् ॥१८९॥ उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वँल्लघून्वर्धयन् अत्युच्चान्नमयन्नतान् समुदयन्विश्लेषयन् संहतान् । क्षुद्रान्कण्टकिनो बहिर्निरसयन् म्लानान्पुनः सेचयन् मालाकार इव प्रयोगनिपुणो राजा चिरं नन्दति ॥ १९० ॥

## संकीर्णप्रकरणम् ४५

सरसाऽपि कवेर्वाणी हरिनामाङ्किता यदि । सादरं

गृह्यते तज्ज्ञैः शुक्तिर्मुक्तान्विता यथा ॥ १ ॥ कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् । एति जीवितमानन्दो नरं वर्षशतादपि ॥२॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च । वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ ३ ॥ धातुवादेषु वित्ताशा मोक्षाशा कौलिके मते । जामातरि च पुत्राशा त्रयमेतन्निरर्थकम् ॥ ४ ॥ को न याति वशं लोके मुखे पिण्डेन पूरितः । मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥५॥ लोकेषु निर्धनो दुःखी ऋणग्रस्तस्ततोऽधिकम् । ताभ्यां रोगयुतो दुःखी तेभ्यो दुःखी कुभार्यकः ॥ ६ ॥ दातुरुन्नतवित्तस्य गुणयुक्तस्य चार्थिनः । दुर्लभः खलु संयोगः सद्बीजक्षेत्रयोरिव ॥ ७ ॥ आरोप्यते शिला शैले यत्नेन महता यथा । निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ ८ ॥ कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम् । कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ९ ॥ अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा । यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ॥ १० ॥ बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् । निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥

११ ॥ प्रभूतवयसः पुंसो धियः पाकः प्रवर्तते । जीर्णस्य चन्दनतरोरामोद उपजायते ॥ १२ ॥ आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः । बकास्तत्र न बध्यन्ते मौनं सर्वार्थ-साधनम् ॥ १३ ॥ अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः । दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ॥ १४ ॥ मौनं कालविलम्बश्च भ्रुकुटी भूमिदर्शनम् । प्रयाणमन्यवार्त्ता च नकारः षड्विधः स्मृतः ॥१५॥ दुःखितेभ्योऽपि भूतेभ्यो मृत्युरोगजरादिभिः । भूयः को दुःखमपरं सघृणो दातुमर्ह-ति ॥१६॥ दुःखं ददाति योऽन्यस्य ध्रुवं दुःखं स विन्दति । तस्मान्न कस्यचित् दुःखं दातव्यं दुःखभीरुणा ॥ १७ ॥ चोद्यमानोऽपि पापेषु शुद्धात्मा न प्रवर्तते । वार्यमाणोऽपि-पापेभ्यः पापात्मा पापमिच्छति ॥ १८ ॥ आश्रमेषु यथो-क्तेषु यथोक्तं ये द्विजातयः । वर्तन्ते संयतात्मानो दुर्गाण्यति-तरन्ति ते ॥ १९ ॥ नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत् । न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥ २० ॥ उत्तमे निर्गुणं गोत्रे नापत्यमुपजायते । आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥ २१ ॥ उत्सवे व्यसने युद्धे दुर्भिक्षे

राष्ट्रविप्लवे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ २२ ॥ कः कालः कानि मित्राणि को देशः कौ व्ययागमौ । कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ २३ ॥ एवं चिन्तयमानस्य स्वधर्मनिरतस्य च । भवन्ति सम्पदः सर्वा गुणलुब्धाः स्वयं हि ताः ॥२४॥ जितेन्द्रियः कोपहन्ता यश्चापत्सु न मुह्यति । स शूरो धन्य इत्याहुः प्राणिहन्ता तु पापकृत् ॥२५॥ कामक्रोधादिशत्रूंश्च श्रेयोमार्गविघातकान् । अज्ञात्वा प्राणिनो दीनान् घातयन्त्यरिबुद्धितः ॥ २६ ॥ प्राणिघातकवीराश्च बहवः सन्ति भूतले । कन्दर्पघातको वीरः क्वचित्तिष्ठति वा न वा ॥२७॥ जीयन्तां दुर्जया देहे रिपवश्चक्षुरादयः । जितेषु तेषु लोकोऽयं ननु कृत्स्नस्त्वया जितः ॥२८॥ परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा । आपन्ने रक्षितव्यं तु दयैषा परि कीर्तिता ॥ २९ ॥ सुहृदोऽप्यरयस्तस्य यस्यात्मा दुरधिष्ठितः । अजीर्णे पथ्यमप्यन्नं व्याधये मरणाय वा ॥ ३० ॥ उत्पन्नपश्चात्तापस्य बुद्धिर्भवति यादृशी । तादृशी यदि पूर्वं स्यात्कस्य न स्यात्फलोदयः॥३१॥ भवत्येकस्थले जन्म गन्धस्तेषां पृथक् पृथक् । उत्पलस्य

मृणालस्य मत्स्यस्य कुमुदस्य च ॥३२॥ अनादायी व्ययं कुर्यादसहायी रणप्रियः । आतुरः सर्वभक्षी च नरः शीघ्रं विनश्यति ॥ ३३ ॥ शुभं वाऽप्यशुभं कर्म फलकालमपेक्षते । शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥ ३४ ॥ विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् । अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ ३५ ॥ ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् । कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥ ३६ ॥ एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥३७॥ शत्रुवाक्यामृतं श्रुत्वा तेन सौहार्दमार्जवम् । नहि धीरेण कर्तव्यमात्मनः शुभमिच्छता ॥ ३८ ॥ अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः । स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसो हि मूर्खता ॥ ३९ ॥ न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः । एतदेवात्र पाण्डित्यं यत्स्वल्पाद्भूरिरक्षणम् ॥४०॥ किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः । को ध्येयो भगवान्विष्णुः किं काम्यं परमं पदम् ॥ ४१ ॥ लुब्धानां याचकः शत्रुश्चौराणां चन्द्रमा रिपुः । कुलटानां पतिः शत्रुर्मूर्खाणां बोधको रिपुः ॥

४२ ॥ दिवा पश्यति नोलूकः काको नक्तं न पश्यति । अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥ ४३ ॥ युक्तमुक्तं पुरा विद्भिश्चिन्ता जूर्तिः सुदारुणा । न भेषजैर्ल-ङ्घनैर्वा न चान्यैरुपशाम्यति ॥ ४४ ॥ किं करिष्यन्ति व-क्तारः श्रोता यत्र न विद्यते । नग्नक्षपणके देशे रजकः किं करिष्यति ॥४५॥ किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥४६॥ कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः । कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ ४७ ॥ वृत्ततस्त्वविहीनानि कुला-न्यल्पधनान्यपि । कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥ ४८ ॥ अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च । कुला-न्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ ४९ ॥ अकुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् । धर्मापेक्षी मृदुर्दान्तः स कुलीनशतैर्वरः ॥ ५० ॥ न कन्यायाः पिता विद्वान् गृह्णी-याच्छुल्कमण्वपि । गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्य-विक्रयी ॥५१॥ प्रदानमपि कन्यायाः पशुवत्कोऽनुमन्यते । विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥ ५२ ॥ श्रा-

वयेन्मृदुलां वाणीं सर्वदा प्रियमाचरेत् । पित्रोराज्ञानुसारी स्यात्सुपुत्रः कुलदीपकः ॥ ५३ ॥ यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥५४॥ अपत्यदर्शनस्यार्थे प्राणानपि च या त्यजेत् । त्यजन्ति तामपि क्रूरा मातरं दारहेतवे ॥५५॥ किं करोमि क्व गच्छामि को वेदानुद्धरिष्यति । मा बिभेषि वरारोहे भट्टाचार्योऽस्मि भूतले ॥५६॥ योऽधीतविद्यः सकलः स सर्वेषां गुरुर्भवेत् । न च जात्याऽनधीतो हि गुरुर्भवितुमर्हति ॥ ५७ ॥ यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः । तत्प्रयत्नेन कुर्वीत विपरीतन्तु वर्जयेत् ॥ ५८ ॥ नालसाः प्राप्नुवन्त्यर्थान्न शठा न च मायिनः । न च लोकरवाद्भीता न च संपत्प्रतीक्षिणः ॥ ५९ ॥ सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् । दैवायत्तं कुले जन्म ममायत्तं हि पौरुषम् ॥ ६० ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ ६१ ॥ अलं करोति हि जरा राजामात्यभिषग्यतीन् । विडम्बयति पण्यस्त्रीमल्लगायनसेवकान् ॥६२॥ मनःशौचं कर्मशौचं कुलशौ-

चञ्च भारत। शरीरशौचं वाक्शौचं शौचं पञ्चविधं स्मृतम् ॥ ६३ ॥ प्रायेण सुकरं दानं प्रायेण सुकरं तपः । प्राणानपेक्षी व्यापारः पुनर्वीरस्य दुर्लभः ॥६४॥ सव्यदक्षिणयोर्यत्र विशेषो नोपलभ्यते। कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्भवेत् ॥ ६५॥अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः। शतांशेनापि मोक्षार्थी तानि चेत्मोक्षमाप्नुयात् ॥६६॥ येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् । धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥ ६७ ॥ जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु । मोहयन्ति च सम्पत्तौ कथमर्थाः सुखावहाः ॥ ६८ ॥ यावन्न साक्षरा माता तावत्तद्बालबालिकाः । निरक्षरा हि तिष्ठन्ति विनोपायसहस्रकैः ॥ ६९ ॥ अभिवादयेत वृद्धान्दद्याच्चैवासनं स्वयम्। कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥ ७० ॥ अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥७१॥ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते॥७२॥ स एव धन्यो विपदि स्वरूपं यो न मुञ्चति । सजसर्ककरैस्तप्तं हिमं देहं न

शीतताम् ॥ ७३ ॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ७४ ॥ अवृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् । त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ॥ ७५ ॥ यस्मिन्देशे न सम्मानो न प्रीतिर्न च बान्धवाः । न च विद्यागमोऽप्यस्ति न तत्र दिवसं वसेत् ॥७६॥ धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः । पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥७७॥ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत् ॥७८॥ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः । नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ७९ ॥ सर्वथा सन्त्यजेद्वादं न कश्चिन्मर्मणि स्पृशेत् । सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधिनः ॥ ८० ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ ८१ ॥ हितोपदेशं शृणुयात्कुर्वीत च यथोदितम् । विदुरोक्तमकृत्वाऽभूत्कौरवः शोकशल्यभाक् ॥८२॥ न पुत्रायत्तमैश्वर्यं कुर्यादार्यः कथञ्चन । पुत्रार्पितप्रभुत्वोऽभूद्धृतराष्ट्रस्तृणोपमः ॥८३॥ क्षिपेद्वाक्यशरान्घोरान्न पारुष्यविषप्लुतान् ।

वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम् ॥८४॥ सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः। अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥८५॥ शनैः पन्थाः शनैः कन्था शनैः पर्वतमस्तके । शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥ ८६ ॥ जल-बिन्दुनिपातेन क्रमशः पूर्यते घटः । स हेतुः सर्वविद्यानां ध-र्मस्य च धनस्य च ॥ ८७ ॥ प्रत्यहं प्रत्यवेक्षेत नरश्चरितमा-त्मनः । किन्नु मे पशुभिस्तुल्यं किन्नु सत्पुरुषैरिति ॥८८॥ स्वजनैर्न विरुध्येत न स्पर्धेत बलीयसा । न कुर्यात्स्त्रीबाल-वृद्धमूर्खेषु च विवादनम् ॥ ८९ ॥ अभियुक्तं बलवता दुर्बलं हीनसाधनम् । हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ ९० ॥ अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् । दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति दूरतः ॥ ९१ ॥ सर्वे यत्र विनेतारः सर्वे यत्राभिमानिनः । सर्वे महत्त्वमिच्छन्ति कुलं तदवसीदति ॥९२॥ यत्र सूक्तं दुरुक्तञ्च समं स्यान्मधुसूदन न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनम् ॥ ९३ ॥ शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया । श्रियोऽनुकूलदानेन लज्जया च कुलाङ्गनाः ॥ ९४ ॥ नवे वयसि यः शान्तः स

शान्त इति कथ्यते । धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते ॥ ९५ ॥ जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥९६॥ उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् । विरक्तस्य तृणं नारी निःस्पृहस्य तृणं जगत् ॥९७॥ सम्पत्सरस्वती सत्यं सन्तानं सदनुग्रहः । सत्ता सुकृतसम्भारः सकाराः सप्त दुर्लभाः ॥ ९८ ॥ सा श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झितः । तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः ॥९९॥ अव्यवस्थितचित्तस्य न जने न वने सुखम् । जने क्लिश्नाति सङ्गेन वने सङ्गविवर्जितः ॥१००॥ क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे । अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः॥१०१ ॥ यस्मिन् रुष्टे भयं नास्ति तुष्टे नैव धनागमः । निग्रहानुग्रहौ न स्तः स रुष्टः किं करिष्यति ॥ १०२ ॥ व्याख्यानान्ते श्मशानान्ते भोजनान्ते च या मतिः । सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ १०३ ॥ पण्डितैः सह साङ्गत्यं पण्डितैः सह संकथाः । पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति ॥१०४॥ धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च ।

आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ १०५ ॥ यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् १०६ न पश्यति च जन्मान्धः कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति ॥ १०७ ॥ नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः । नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानात्परं सुखम् ॥ १०८ ॥ हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् । श्रोत्रस्य भूषणं शास्त्रं भूषणे किं प्रयोजनम् ॥१०९॥ लालने बहवो दोषा-स्ताडने बहवो गुणाः । तस्मात्पुत्रश्च शिष्यश्च ताडयेन्न तु लालयेत् ॥११० ॥ लालयेत्पञ्च वर्षाणि दश वर्षाणि ताड-येत् । प्राप्ते षोडशके वर्षे पुत्रं मित्रवदाचरेत् १११ आदा-नस्य प्रदानस्य कर्तव्यस्य च कर्मणः । क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ११२ ॥ किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः । इति संचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥ ११३ ॥ देहे पातिनि का रक्षा यशो रक्ष्यम-पातवत् । नरः पतितकायोऽपि यशः कायेन जीवति॥११४ ॥ निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति । तस्माद्देहेष्वनित्येषु

कीर्तिमेकामुपार्जय ॥ ११५ ॥ न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ११६ ॥ षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता । निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ११७ ॥ अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥११८॥ श्रोतव्यं हितकामानां सुहृदां हितमिच्छताम् । अकर्तव्यो हि निर्बन्धो निर्बन्धश्च क्षयोदयः ॥ ११९ ॥ व्याकुलोऽपि विपत्पातैः स्मरेद्विष्णुं सदा हृदि । शरतल्पगतो भीष्मः सस्मार परमेश्वरम् ॥ १२० ॥ सौहृदेन परिसक्तं निःस्नेहं खलवत्त्यजेत् । सोदरं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ १२१ ॥ पञ्च त्वाऽनुगमिष्यन्ति यत्र यत्र गमिष्यसि । मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ १२२ ॥ सतां मतमतिक्रम्य योऽसतां वर्तते मते । शोचन्ते व्यसने तस्य सुहृदो न चिरादिव ॥१२३॥ आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः । अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ॥ १२४ ॥ नात्यन्तं गुणवत्किञ्चिन्न चाप्यत्यन्तनिर्गुणम् । उभयं सर्वकार्येषु दृश्यते साध्वसाधु वा ॥

१२५ ॥ दाने तपसि शौर्ये वा विज्ञाने विनये नये । विस्मयो नहि कर्तव्यो बहुरत्ना वसुन्धरा ॥१२६॥ सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन । नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ॥ १२७ ॥ आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया । विपश्चिद्गुणसम्पन्नः प्राप्नोत्येव महद्यशः ॥१२८॥ वनानि दहतो वह्नेः सखा भवति मारुतः । स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ १२९ ॥ चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृपः । पश्य चक्रस्य माहात्म्यं मृत्पिण्डः पात्रतां गतः ॥१३०॥ शुचिभूमिगतं तोयं शुचिर्नारी पतिव्रता । शुचिः क्षेमकरो राजा सन्तोषी ब्राह्मणः शुचिः ॥ १३१ ॥ पालनाच्च त्रयीधर्मः पाशब्देनेह कथ्यते । तं खण्डयन्ति ये यस्मात्पाखण्डास्तेन ते स्मृताः ॥ १३२ ॥ मुकुटे रोपितः काचश्चरणाभरणे मणिः । नहि दोषो मणेरस्ति किन्तु साधोरविज्ञता १३३ अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम् । अमृतं राजसम्मानममृतं क्षीरभोजनम् १३४ व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते । स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ १३५ ॥ यस्य न ज्ञायते वीर्यं न कुलं न

विचेष्टितम् । न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥ १३६ ॥ शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् । रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ १३७ ॥ अयशः प्राप्यते सत्सु येन चापगतिर्भवेत् । स्वर्गाच्च भ्रश्यते येन तत्कर्म न समाचरेत् ॥ १३८ ॥ वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥ १३९ ॥ विश्वासप्रतिपन्नानां वञ्चने का विदग्धता । अङ्कमारुह्य सुप्तानां हन्तुः किन्नाम पौरुषम् ॥ १४० ॥ यदपथ्यवतामायुर्यदनीतिमतां श्रियः । तदेतत्काकतालीयं तदेतच्च घुणाक्षरम् ॥ १४१ ॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि दूरगः ॥ १४२ ॥ सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् । योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ १४३ ॥ नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः । नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ १४४ ॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोकमाचरेत् । १४५ । आपद्युन्मार्गगमने कार्यकालात्ययेषु च । कल्याणवचनं ब्रूया-

दपृष्टोऽपि हितो नरः ॥ १४६ ॥ मनसापि हि भूतानां यो-
ऽनिष्टानि विचिन्तयेत् । भवन्ति तस्य तान्येव लोकेऽस्मिन्नात्र
संशयः ॥१४७॥ यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम् ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥१४८॥ पित्रो-
र्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा । तेषु हि त्रिषु तुष्टे-
षु तपः सर्वं समाप्यते ॥ १४९ ॥ मनसैव कृतं राम न शरी-
रकृतं कृतम् । येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता
॥१५०॥ मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः ।
नीचाः कलहमिच्छन्ति शान्तिमिच्छन्ति साधवः ॥१५१॥
असम्भवगुणस्तुत्या जायते स्वात्मनस्त्रपा । कर्णिकारं सुग-
न्धीति वदन्को नोपहस्यते ॥ १५२ ॥ रोगशोकपरीताप-
बन्धनव्यसनानि च । आत्माऽपराधवृक्षाणां फलान्येतानि
देहिनाम् ॥१५३॥ पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम् ।
शरीरबलसन्धानं स्नानमोजस्करं परम् ॥ १५४ ॥ लाघवं
कर्मसामर्थ्यं स्थैर्यं क्लेशसहिष्णुता । दोषक्षयोऽग्निवृद्धिश्च
व्यायामादुपजायते ॥१५५॥ शारीराज्जायते व्याधिर्मानसो
नात्र संशयः । मानसाज्जायते चापि शारीर इति निश्चयः॥

१५६ ॥ जनिता चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ १५७ ॥ राजपत्नी गुरोः पत्नी मित्रपत्नी तथैव च । पत्नीमाता स्वमाता च पञ्चैता मातरः स्मृताः ॥ १५८ ॥ न स्त्रीजितः प्रमूढः स्याद्गाढरागवशीकृतः । पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्यजत् ॥ १५९ ॥ विद्यार्थं ब्रह्मचारी स्यात्सर्वेषां पालने गृही । ताभ्यां विना न शोभेते गृहस्थब्रह्मचारिणौ ॥ १६० ॥ युक्तियुक्तमुपादेयं वचनं बालकादपि । अन्यत्तृणमिव त्याज्यमप्युक्तं परमेष्ठिना ॥ १६१ ॥ परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः । तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥ १६२ ॥ स्वयं कर्म करोत्यात्मा स्वयं तत्फलमश्नुते । स्वयं भ्रमति संसारे स्वयं मोक्षञ्च गच्छति ॥ १६३ ॥ उपदेशो न दातव्यो यादृशे तादृशे नरे । चटिका कपिमूर्खेण सगृहा निर्गृहा कृता ॥ १६४ ॥ बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् । वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ १६५ ॥ अर्थिप्रश्नकृतौ लोके सुलभौ तौ गृहे गृहे । दाता चोत्तरदश्चैव दुर्लभौ पुरुषौ भुवि ॥ १६६ ॥ तीव्रे तपसि

लीनानामिन्द्रियाणां न विश्वसेत्। विश्वामित्रोऽपि सोत्कण्ठः कण्ठे जग्राह मेनकाम् ॥ १६७॥ भक्तं रक्तं सदा सक्तं निर्दोषं न परित्यजेत् । रामस्त्यक्त्वा सतीं सीतां शोकशल्याकुलोऽभवत् ॥ १६८ ॥ या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ १६९ ॥ अपूज्यपूजनाच्चैव पूज्यानाञ्चाप्यपूजनात् । नृघातकसमं पापं शश्वत्प्राप्नोति मानवः ॥ १७० ॥ अपूज्या यत्र पूज्यन्ते पूज्यानान्तु विमानना । त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम् ॥ १७१ ॥ यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः । नहि तस्मात्फलं तस्य सुकृष्टादूषरादिव ॥ १७२ ॥ हिताशी स्यान्मिताशी स्यात्कालभोजी जितेन्द्रियः । पश्यन् रोगान्बहून् कष्टान् बुद्धिमान्विषमाशनात् ॥ १७३ ॥ जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाशमिव पङ्केन न स पापेन लिप्यते ॥ १७४ ॥ भद्रम्भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्। शुष्कवैरं विवादञ्च न कुर्यात्केनचित्सह ॥ १७५ ॥ उपभोक्तुं न जानाति श्रियं प्राप्यापि मानवः । आकण्ठजलमग्नोऽपि श्वा लिहत्येव जिह्वया ॥ १७६ ॥

मुख्यमेकं पुरस्कृत्य शून्यात्मानोऽपि साधकाः । भवन्ति तं विना नैव यथा संख्याऽङ्कबिन्दवः ॥१७७॥ पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् । मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ १७८ ॥ पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः । न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः॥१७९ ॥ सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च ॥१८०॥ ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा ॥ १८१ ॥ उपदेशक्रमो राम व्यवस्थामात्रपालनम् । ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव केवला ॥ १८२ ॥ अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम् । प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ १८३ ॥ दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तर-दायकः । ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥१८४॥ अहो साहजिकं प्रेम दूरादपि विराजते । चकोरनयनद्वन्द्व-माह्लादयति चन्द्रमाः ॥ १८५ ॥ कारणात्प्रियतामेति द्वेष्यो भवति कारणात् । अर्थार्थी जीवलोकोऽयं न कश्चित्कस्य-चित्प्रियः ॥ १८६ ॥ सख्योः सोदर्ययोर्भ्रात्रोर्दम्पत्योर्वा

परस्परम् । कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह ॥ १८७॥ पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम् । लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् ॥१८८॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्नमपि मूलानि कृन्तति ॥ १८९ ॥ न विश्वसेदमित्रस्य मित्रस्यापि न विश्वसेत् । कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥ १९० ॥ कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि । छन्नं सन्तिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ १९१ ॥ संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः । नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः ॥ १९२ ॥ मृदोः परिभवो नित्यं वैरं तीक्ष्णस्य नित्यशः । उत्सृज्यैतद्द्वयं तस्मान्मध्यां वृत्तिं समाश्रयेत् ॥ १९३ ॥ अक्षिपक्ष्म कदा लुप्तं छिद्यन्ते हि शिरोरुहाः । वर्धमानात्मनामेव भवन्ति हि विपत्तयः ॥१९४॥ यथा सुनिपुणः सम्यक् परदोषेक्षणे रतः । तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ॥ १९५ ॥ परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ १९६ ॥ तज्ज्ञानं स च शास्त्रार्थस्तद्वैदग्ध्यमनिन्दितम् ।

सच्छिष्याय विरक्ताय साधो यदुपदिश्यते ॥१९७॥ अशिष्यायाविरक्ताय यत्किञ्चिदुपदिश्यते । तत्प्रयात्यपवित्रत्वं गोक्षीरं श्वदृताविव ॥ १९८ ॥ गृहक्षेत्रकलत्रादि दुस्त्यजं सर्वजन्तुभिः । त्यक्त्वाऽपि न त्यजत्येष गर्वपर्वतमद्भुतम् ॥ १९९ ॥ दध्योदनं यथा कश्चिद्भारभृन्मस्तकास्थितम् । परित्यज्य वहेद्व्यर्थं पाषाणं हस्तिसन्निभम् ॥ २०० ॥ तथा सुखकरं सर्वं त्यक्त्वा दारादिकं पुमान् । दुःखदं गर्वमत्यन्तं वहत्येष सुदुर्वहम् ॥२०१॥ तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् । मूर्खहस्ते न दातव्यमेवं वदति पुस्तकम् ॥२०२॥ उष्ट्राणाञ्च विवाहेषु गीतं गायन्ति गर्दभाः । प्रशंसन्ति परस्परमहो रूपमहो ध्वनिः ॥ २०३ ॥ अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति । मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥ २०४ ॥ सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु । स्वामिनि शक्तिसमेते निवेद्य दुःखं जनः सुखीभवति ॥२०५॥ अबला यत्र प्रबला बालो राजा निरक्षरो मन्त्री । नहि नहि तत्र धनाशा जीवित आशापि दुर्लभा भवति ॥२०६॥ आपदि मित्रपरीक्षा शूर-

परीक्षा रणाङ्गणे भाति । विनये वंशपरीक्षा स्त्रियः परीक्षा तु निर्धने पुंसि ॥ २०७ ॥ आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म । स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ २०८ ॥ विरला जानन्ति गुणान्विरलाः कुर्वन्ति निर्धने स्नेहम् । विरलाः परकार्यरताः परदुःखेनापि दुःखिता विरलाः ॥ २०९ ॥ व्यसनानि सन्ति बहुधा व्यसनद्वयमेव केवलं व्यसनम् । विद्याऽभ्यसनं व्यसनं अथवा हरिपादसेवनं व्यसनम् ॥ २१० ॥ अनुचितकर्मारम्भः स्वजनविरोधो बलीयसा स्पर्धा । दुष्टस्त्रीविश्वासो ह्यापद्द्वाराणि चत्वारि ॥ २११ ॥ अधनं खलु जीवधनं हेमार्द्धधनं महाधनं धान्यम् । अतिधनमेतत्त्रितयं विद्या शीलञ्च मित्रञ्च ॥ २१२ ॥ यस्मिन्यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः । मायाचारो मायया वर्तितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥ २१३ ॥ यस्मिन्कुले यः पुरुषः प्रधानः स सर्वयत्नेन हि रक्षणीयः । तस्मिन्विनष्टे सकलं विनष्टं न नाभिभङ्गे ह्यरका वहन्ति ॥ २१४ ॥ लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः । स सर्व एवादिकवेः प्रभावो न कोपनीयाः

कवयः क्षितीन्द्रैः ॥ २१५ ॥ गुणा दश स्नानपरस्य साधो रूपञ्च तेजश्च बलञ्च शौचम्। आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च यशश्च मेधाः ॥ २१६ ॥ आत्मा नदी संयम-पुण्यतीर्था सत्योदका शीलतटा दयोर्मिः। तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुद्ध्यति चान्तरात्मा ॥२१७॥ प्रज्ञा-वृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम्। कार्याकार्ये पूजयित्वा प्रसाद्य यः संपृच्छेन्न स मुह्येत्कदाचित् ॥ २१८ ॥ विश्वं विलोक्याप्यखिलं तदीयकर्तारमीशं नहि मन्यते यः। अहं हि जातो जनकं विनेति न भाषते विज्ञवरः कथं सः ॥ २१९ ॥ यो नोद्धतं कुरुते जातु वेषं न पौरुषे-णापि विकत्थतेऽन्यान्। न मूर्छितः कटुकान्याह किञ्चि-त्प्रियं सदा तं कुरुते जनो हि ॥ २२० ॥ स्थाणुरयं भार-हारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। अर्थवि-त्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥२२१॥ यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य। एवं हि शास्त्राणि बहून्यधीत्य चार्थेषु मूढाः खरवद्वहन्ति ॥ २२२ ॥ एको हि दोषो गुणसंनिपाते निमज्जतीत्येतदयुक्तमुक्तम्।

रूपादिकान्सर्वगुणान्निहन्ति किं मौर्ख्यमेकं न शरीरभाजाम् २२३ कोलाहले काककुलस्य जाते विराजते कोकिलकूजितं किम्। परस्परं संवदतां खलानां मौनं विधेयं सततं सुधीभिः २२४ ॥ शाठ्येन धर्मं कपटेन मित्रं परोपतापेन समृद्धि-भावम् । सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्त-मपण्डितास्ते ॥ २२५ ॥ दानं दरिद्रस्य प्रभोश्च शान्तिर्यू-नां तपो ज्ञानवताञ्च मौनम् । इच्छानिवृत्तिश्च सुखान्वितानां दया च भूतेषु दिवं नयन्ति ॥ २२६ ॥ अर्थागमो नित्यम-रोगिता च प्रिया च भार्या प्रियवादिनी च । वश्यश्च पुत्रो-ऽर्थकरी च विद्या षड्जीवलोकस्य सुखानि राजन् ॥२२७ ॥ आरोग्यमानृण्यमविप्रवासः सप्रत्ययावृत्तिरभीतवासः । सद्भिर्मनुष्यैः सह संप्रयोगः षड्जीवलोकस्य सुखानि राजन् ॥ २२८ ॥ प्रभुर्विवेकी धनवांश्च दाता विद्वान्विरागी प्रमदा सुशीला । तुरङ्गमः शस्त्रनिपातधीरो भूमण्डलस्याभरणानि पञ्च ॥ २२९ ॥ देशाटनं राजसभाप्रवेशो व्यापारिविद्वज्ज-नसङ्गतिश्च । सर्वेषु शास्त्रेष्ववलोकनञ्च चातुर्यमूलानि भवन्ति पञ्च ॥ २३० ॥ स्वर्गच्युतानामिह जीवलोके चत्वारि

चिह्नानि वसन्ति देहे। दानप्रसङ्गो मधुरा च वाणी देवार्चनं पण्डिततर्पणञ्च ॥ २३१ ॥ नातिलोभो विनीतश्च दयादानरुचिर्मृदुः । प्रसन्नवदनश्चैव मनुष्यादागतो नरः ॥ २३२ ॥ बह्वाशी नैव सन्तुष्टो मायावी च क्षुधाधिकः । स्वपन्मूढोऽलसश्चैय तिर्यग्योन्यागतो नरः ॥ २३३ ॥ विरोधिता बन्धुजनेषु नित्यं सरोगता मूर्खजनेषु सङ्गः । अतीवरोषी कटुका च वाणी नरस्य चिह्नं नरकागतस्य ॥ २३४ ॥ अनेकशास्त्रं बहुवेदितव्यमल्पश्च कालो बहवश्च विघ्नाः। यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ २३५॥ तद्भोजनं यन्मुनिभुक्तशेषं स बुद्धिमान्यो न करोति पापम् । तत्सौहृदं यत्क्रियते परोक्षं दम्भैर्विना यः क्रियते स धर्मः ॥ २३६ ॥ वाक्यन्तु यो नाद्रियतेऽनुशिष्टः प्रत्याह यश्चापि नियुज्यमानः। प्रज्ञाऽभिमानी प्रतिकूलवादी त्याज्यः स तादृक् त्वरयैव भृत्यः ॥ २३७ ॥ बलोपपन्नोऽपि हि बुद्धिमान्नरः परं नयेन्न स्वयमेव वैरताम् । भिषङ्ममास्तीति विचिन्त्य भक्षयेदकारणात्कोऽपि विचक्षणो विषम् ॥२३८॥ यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ।

तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥२३९॥ इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभङ्ग-भूमिः । क्षणमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपाणाम् ॥ २४० ॥ दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः सन्तापयन्ति कमपथ्यभुजं न रोगाः । कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः कं स्त्रीकृता न विषया ननु तापयन्ति ॥ २४१ ॥ अर्था हसन्त्युचितदानविहीनलुब्धं भूम्यो हसन्ति मम भूमिरिति ब्रुवाणम् । जारा हसन्ति तनयानुपलालयन्तं मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥ २४२ ॥ शक्तेनापि सता जनेन विदुषा कालान्तरप्रेक्षिणा वस्तव्यं खलु वज्रपातविषमे क्षुद्रेऽपि पापे जने । दर्व्यग्रकरेण धूममलिनेनायासयुक्तेन किं भीमेनातिबलेन मत्स्यभवनेऽपूपा न संघट्टिताः ॥२४३॥ सिद्धिं वाञ्छयता जनेन विदुषा तेजो निगृह्य स्वकं सत्वौ-त्साहवताऽपि दैवगतिषु स्थैर्यं प्रकार्यं क्रमात् । देवेन्द्रद्रुहि-णोपमैर्बहुगुणैरभ्यर्थितो भ्रातृभिः किं क्लिष्टः सुचिरं विराट-भवने पूर्वं न धर्मात्मजः ॥ २४४ ॥ एहि स्वागतमाविशा-सनमिदं कस्माच्चिराद्दृश्यसे का वार्ता परिदुर्बलोऽसि नितरां

प्रीतोऽस्मि ते दर्शनात् । इत्येवं समुपागतं द्विजवरं सम्भाव-
यन्सादरात्तेषां युक्तमशङ्कितेन मनसा गेहेषु गन्तुं सदा ॥
२४५॥ को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः । कः
शूरो विजितेन्द्रियः प्रियतमा काऽनुव्रता किं धनं विद्या किं
सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥२४६॥ ऐश्वर्यस्य
विभूषणं सुजनता शौर्यस्य वाक्संयमो ज्ञानस्योपशमः कुलस्य
विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा बलवतां
धर्मस्य निर्व्याजता सर्वेषामपि सर्वकारणमिदं शीलं परं
भूषणम् ॥२४७॥ सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रि-
यान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिञ्जैमिनिम्
। छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलं अज्ञाना-
वृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥२४८॥ छेदश्चन्दन
चूतचम्पकवने रक्षाऽपि शाखोटके हिंसा हंसमयूरकोकिल-
कुले काकेषु नित्यादरः । मातङ्गेन खरक्रयः समतुला
कर्पूरकार्पासयोः एषा यत्र विचारणा गुणिगणे देशाय तस्मै
नमः ॥ २४९ ॥ वक्रे वल्गाप्रकर्षः समरभुवि तव प्राणर-

क्षापि दैवात् स्वेच्छाचारो न चास्ते नहि भवति तथा भारवाहो नितान्तम् । इत्युक्तोऽश्वः खरेण प्रहसितवदनो मूक एवावतस्थे तस्माज्ज्ञात्या महान्तोऽधमजनविषये मौनमेवाश्रयन्ते ॥ २५० ॥

## नैयायिकवैयाकरणौ ४६

मोहं रुणद्धि विमलीकुरुते च बुद्धिं सूते च संस्कृतपदव्यवहारशक्तिम् । शास्त्रान्तराभ्यसनयोग्यतया युनक्ति तर्कश्रमो न तनुते किमिहोपकारम् ॥ १ ॥ गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च । अमी समाघ्रातवितर्कवादाः समागताः फूंकटपादमिश्राः ॥ २ ॥ कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः । प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥३॥ यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥ ४ ॥ शब्दशास्त्रमनधीत्य यः पुमान्वक्तुमिच्छति वचः सभान्तरे । बन्द्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना ॥५॥

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु । गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १ ॥ मस्ते दुःसहवेदनाकवलिते मग्ने स्वरेऽन्तर्गलं तप्तायां ज्वरपावकेन च तनौ तान्ते हृषीकव्रजे । दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः कः शक्तः कलितामयप्रशमनो वैद्यात्परो विद्यते ॥ २ ॥ वैद्यराज नमस्तुभ्यं यमराजसहोदर । यमस्तु हरति प्राणान्वैद्यः प्राणधनानि च ॥ ३ ॥ चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ ४ ॥ न धातोर्विज्ञानं न च परिचयो वैद्यकनये न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः । तथाप्येते वैद्या इति तरलयन्तो जडजनानसून्मृत्योर्भृत्या इव वसु हरन्ते गदजुषाम् ॥ ५ ॥

## सुपुत्रः ४८

प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः । त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ १ ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन भासते । कुलं पुरुषसिंहेन चन्द्रेणेव हि शर्वरी ॥ २ ॥ पुण्यस्थाने कृतं येन तपः क्वाप्यतिदुष्करम् । तस्य

पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥ ३ ॥ एकेनापि सुपुत्रेण जायमानेन सत्कुलम् । शशिना चेव गगनं सर्वदैवो-उज्ज्वलीकृतम् ॥४॥ एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना । वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ ५ ॥ दुर्बलार्थं बलं यस्य धर्मार्थश्च परिग्रहः । वाक् सत्यवचनार्था च पिता तेनैव पुत्रवान् ॥ ६ ॥ पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ७ ॥ प्रज्ञया वा प्रसारिण्या यो बलेन धनेन वा । धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ ८ ॥ मृष्टं किं सुतवचनं मृष्टतरं किं तदेव सुतवचनम् । मृष्टान्मृष्टतमं किं श्रुतिपरिपक्वं तदेव सुत-वचनम् ॥ ९ ॥ पात्रं न तापयति नैव मलं प्रसूते स्नेहं न संहरति नैव गुणान् क्षिणोति । द्रव्यावसानसमये चलतां न धत्ते सत्पुत्र एष कुलसद्मनि कोऽपि दीपः ॥ १० ॥

## कुपुत्रः ४९

एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । दशभिः सह पुत्रैश्च भारं वहति रासभी ॥ १ ॥ अविनीतः सुतो जातः कथं न दहनात्मकः । विनीतस्तु सुतो जातः कथं न

पुरुषोत्तमः ॥ २ ॥ यदि पुत्रः कुपुत्रः स्याद्व्यर्थो हि धनसञ्चयः । यदि पुत्रः सुपुत्रः स्याद्व्यर्थो हि धनसञ्चयः ॥३॥ एकेन शुष्कवृक्षेण दह्यमानेन वह्निना । दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं यथा ॥ ४ ॥ निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् । मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ ५ ॥ यस्य पुत्रो न वै विद्वान्न शूरो न च धार्मिकः । अप्रकाशं कुलं तस्य नष्टचन्द्रेव शर्वरी ॥६॥ किं तया क्रियते धेन्वा या न दोग्ध्री न गर्भिणी । कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥७॥ वरं न राज्यं न कुराजराज्यं वरं न रामा न कुरामरामा । वरं न पुत्रो न कुपुत्रपुत्रो वरं न शिष्यो न कुशिष्यशिष्यः ॥ ८ ॥ वरं गर्भस्रावो वरमृतुषु नैवाभिगमनं वरं जातः प्रेतो वरमपि च कन्यैव जनिता । वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिर्न चाविद्वान् रूपद्रविणगणयुक्तोऽपि तनयः ॥ ९ ॥ पित्रोर्नैव वचः शृणोति दिवसत्यागे व्रजत्यालयं यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति । बन्धूनामुपदेशवाचि वदति क्रोधेकतानं वचः साधून्निन्दति दुर्जनश्च मनुते मित्रं कुपुत्रो जनः ॥ १० ॥

## गोमाहात्म्यम् ५०

कीर्तनं श्रवणं दानं दर्शनश्चापि पार्थिव । गवां प्रशस्यते वीर सर्वपापहरं शिवम् ॥ १ ॥ गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते । गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥२॥ अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च । अमृतायतनाश्चैताः सर्वलोकनमस्कृताः ॥ ३ ॥ गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः । गावः कामदुहो देव्यो नान्यत्किञ्चित्परं स्मृतम् ॥ ४ ॥ गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युतम् । इत्येतद्गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ ॥ ५ ॥

## शान्तिपाठः ५१

ओ३म् शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥१॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनुभिर्व्यशेमहि देवहितं यदायुः ॥ २ ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ३ ॥ अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे । अभयं पश्चादभयं

पुरस्तादुत्तरादधरादभयं नो अस्तु ॥ ४ ॥ अभयं मित्राद-भयममित्रादभयं ज्ञातादभयं परोक्षात् । अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ॥ ५ ॥ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरं गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥ इन्द्रो विश्वस्य राजति । शं नोऽअस्तु द्विपदे शं चतुष्पदे ॥ ७ ॥ शं नो वातः पवता ७ँ शं नस्तपतु सूर्य्यः । शं नः कनिक्रदद्देवः पर्जन्योऽअभिवर्षतु ॥ ८ ॥ अहानि शं भवन्तु नः श ७ँ रात्रीः प्रति धीयताम् । शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या । शं न इन्द्रापूषणा वाजसातौ शमि-न्द्रासोमा सुविताय शं योः ॥ ९ ॥ गणानां त्वा गणपति- ७ँ हवामहे प्रियाणां त्वा प्रियपति ७ँ हवामहे निधीनां त्वा निधिपति ७ँ हवामहे वसो मम । आहमजानि गर्भधमात्वम-जासि गर्भधम् ॥ १० ॥ मा नस्तोके तनये मा न आयौ मानो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्वा हवामहे ॥११॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥१२॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा ॥ १३ ॥ स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा। यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥ १४ ॥ त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः ॥ १५ ॥ त्वं नः सोम विश्वतो रक्षा राजन्नघायतः। न रिष्येत्त्वावतः सखा ॥ १६ ॥ स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये ॥१७॥ सेमं नः काममापृण गोभिरश्वैः शतक्रतो। स्तवाम त्वा स्वाध्यः ॥१८॥ सह नाववतु सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ १९ ॥ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥२०॥ ओं द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व ँ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥२१॥ ओं शान्तिः ३

इति श्रीमत्परमहंसपरिव्राजकाचार्य पण्डित स्वामी अच्युतानन्द सरस्वतीति नामधेयैः संगृहीतायां व्याख्यानमालायामुत्तरार्धं समाप्तं समाप्तश्चायं ग्रन्थः ॥ * ओ३म् *

# व्याख्यानमालाया शुद्धाशुद्धपत्रम्

| पृष्ठे | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२ | १६ | ... | वै |
| ३४ | १७ | कोर्तिंच | कीर्त्तिंच |
| ३७ | ८ | द्द्विज | द् द्विज |
| ३८ | ४ | द ग्टहो | द् ग्टहो |
| ४० | १२ | अपचेताः | अप्रचेताः |
| ४७ | १५ | परि | प्र |
| ६६ | १५ | दीनदयां | दीनेदयां |
| ६८ | ८ | विद्यांय | विद्यां |
| ७१ | १५ | द्वितीयं | द्वितीये |
| ७१ | १६ | तृतीयं | तृतीये |
| ७३ | १३ | चेद्दह्विनां | चेद्देहिनां |
| ७६ | १ | गुर्वो | गुर्वों |
| ७६ | ७ | श्रोभान् | श्रीमान् |
| ७८ | ६ | अत्याखा | अत्याचार |
| ८१ | १४ | रात्यं | सत्यं |
| ८७ | ३ | निःसङ्गा | निःसङ्गाः |
| ८८ | १२ | सागर | सागरे |
| ९० | १२ | सिद्दमिदं | सिद्धमिदं |
| ९३ | ६ | गतुं | गन्तुं |
| १०३ | ७ | स्वययमा | स्वयमा |
| ११३ | २ | भोगच्छा | भोगेच्छा |
| १२३ | ७ | वाक | वाक् |
| १२४ | ८ | सञ्जना | सञ्ज्ञाना |
| १२७ | १२ | बहुस्रुतः | बहुस्रुताः |
| १४५ | ८ | चायन्ति | चपयन्ति |
| १५१ | १३ | अःष्ट | अदृष्ट |
| १७० | ६ | चिप | चिप्र |
| १८२ | १२ | तैथव | तथैव |
| २०२ | १३ | अशो | अशौच |
| २१६ | ३ | तदा | सदा |
| २४८ | ५ | सदहत्त | सद्वृत्त |
| ,, | १७ | मूर्गवा | मूर्खा |
| २५२ | ६ | चेत्मोच्च | चेन्मोच्च |

—०—